एव प्रामुख्येन प्रवृत्तोऽभूत्। प्रथमं संपादकीयमप्ययमलिखत्। परस्तात् सहकारि-संपादकत्वेन लेखांष्टिप्पणीश्चालिखत्। तदनु प्रभूतकालं प्रधान-संपादकोऽस्थात्। प्रायः पञ्चाशद्वर्षावधावस्मिन् द्विः, पर्यायद्वये, पत्रमिदं प्राकाशि। प्रायः सर्वस्मिन्नप्यस्मिन्नवधौ मथुरानाथशास्त्री सम्पादकरूपेणानेन सह सम्बद्धोऽस्थात्। अनेन प्रसंगेनाऽयं संस्कृत-पत्रकारतायाम् युगप्रवर्तनामिवाऽकरोत्। बङ्गभाषायां निपुणेन, तत्साहित्याध्येत्रानेन तदानीं बङ्ग-भाषायाः "प्रवासि"-प्रभृतीनां विश्वप्रथितानां मासिकपत्राणां, डॉ. रामानन्द-चट्टोपाध्यायप्रभृतीनां संपादकाचार्याणां च शैली संस्कृतेऽवतार्यानेके नूतनाः स्तंभा, विधाः, सरण्यश्च संस्कृते समारब्धाः। "विनोद-वाटिका" इति शीर्षकेण व्यङ्ग्यविनोदानां, "संवादाः संपादकाभिप्रायाश्च" इति शीर्षकेण सामयिकघटनानां तत्संबंधे संपादकीयटिप्पणीनां, वङ्गमासिकपत्र "प्रवासि" संपादकादिभिः प्रचालितस्य 'कष्टिपाथर' (निकष) स्तंभस्यानुरूपमेव 'साहित्यकुसुमवाटिका' शीर्षकेण नूतनसाहित्यसमालोचनस्य च स्तंभानयं नियतीकृतवान्। लघुकथाः, यात्रावृत्तानि (रिपोर्ताज), काल्पनिककथाः (फंतासी), एकाङ्कनाटकानि, ललितनिबन्धान् शोधलेखान्, लघूपन्यासान् (धारावाहिकरूपेण), अन्याश्च विविधा नूत्नविधाः समावेश्य पत्रस्यास्य माध्यमेन सोऽयं संस्कृतपत्रकारतायां नवीनानि कीर्तिमानान्यरीरचत्।

आदर्शरमणी, अनादृता, असमसाहसम् इत्यादयो बहवः संस्कृतोपन्यासा वङ्गभाषीयोपन्यासशैली-प्रेरितेनानेन लिखिताः पत्रेऽस्मिन् धारावाहिक शृङ्खलासु प्राकाश्यन्त। बहवो लेखकाः प्रेरिताः स्थापिताश्चानेन, पत्रस्यास्य बहवो विशेषाङ्काः विषय-विशेषमवलम्ब्य प्रभूतं साहित्यं प्रस्तुवन्तः प्रकाशमभजन्। वेदाङ्कः (विद्यावाचस्पति श्रीमधुसूदन झा-महाभागाय समर्पितो वेदविद्याविवेचनपरः), आयुर्वेदाङ्कः (स्वामिलक्ष्मीराम-भिषगाचार्याय समर्पितः), शिक्षाङ्कः (शिक्षापरिष्काराय प्रकाशितः), दर्शनाङ्कः (म.म.पं. गिरिधरशर्मणे समर्पितः) इत्यादयो विशेषाङ्का ऐतिहासिकं महत्वं दधति। इत्थं हि सन् १९०४ वर्षादारभ्य ई. १९४९ वर्षपर्यन्तं यदवधीदं पत्रं

जयपुरात्प्राकाश्यत, सोऽयं संपादकत्वमस्य निरवहत्। (कतिपयं कालं व्याकरणाचार्याः पं. सूर्यनारायणशर्मणोऽपि संपादकत्वमन्वतिष्ठन्) १९५० ई. वर्षात्काशीं प्रति प्रतिस्थतवत्यस्मिन् पत्रे १९५२ ई. वत्सरे जयपुरात् प्रकाश्यमानाया 'भारती' संस्कृतमासिकपत्रिकायाः-संपादनमनेनाऽऽरब्धं यन् मृत्युपर्यन्तं निर्व्यूढम्।

**अनुवादाः**—विविधभाषागतस्य साहित्यस्य संस्कृतेऽनुवादमाध्यमेनावतारणाऽप्यस्य प्रमुखमवदानम्। प्राकृतभाषायाः प्रसिद्धस्य मुक्तकसंग्रहस्य 'गाथासप्तशती'ति ख्यातस्य हालकवि-विरचितस्य वाचनं कुर्वाणेनानेनानुभूतं यत्प्राकृतमिदानीं न तावत् परिचितमिति प्राकृतगाथास्त्वरितमेव न हृदयङ्गमा जायन्ते। यदि तासां संस्कृते समच्छन्दोऽनुवादः स्यात्तर्हि सजीवता सुभृशमनुभूयेत। एतस्याभूत् फलं यत्सर्वासामपि गाथानां संस्कृते निबन्धनं कृत्वा, आलोचनात्मक-तुलनात्मक-विवेचन-परक-भूमिकया सह "संस्कृत-गाथा-सप्तशती" ति शीर्षकेण तामिमां कृतिमसौ निर्णयसागर-मुद्रणालयात् प्रकाशयामास। अस्या व्यङ्ग्य-सर्वङ्कषानाम्नीं टीकामप्ययमलिखत् या सहैव प्राकाशि १९३० ई. वर्षे।

ब्रजभाषाकवेः विहारिणः सप्तशतीमप्ययमनूदितवान् संस्कृते दोहाच्छन्दःस्वेव। एवंविधानि संस्कृतदोहाच्छदांसि बहूनि 'विहारिविलास' इति शीर्षकान्तः 'साहित्यवैभव' काव्ये प्रकाशितानि सुबहुचर्चितान्यकथाकाराणांभूवन्। वङ्ग-भाषाया बहूनामुपन्यासानां, हिन्दीकथाकाराणां प्रेमचन्द-प्रभृतीनां बह्वीनां लघुकथानां, वङ्गीयानां गल्पानां (लघुकथानाम्), निबन्धानामन्यासु च विधासु विलिखितस्य प्रभूतस्य साहित्यस्यानुवादा अनेन विहिताः। एवंविधसाहित्यस्यच्छायां गृहीत्वा तदनुहारिण्यां शैल्यां संस्कृते तद्विधा- रचना विधायानेन संस्कृतेऽभिव्यक्तिविधानां विस्तारं वैविध्यं चाऽऽनायितुं प्रयतितम्।

**संस्कृत-भाषाया जीवितत्वख्यापनम्**—एवं हि सर्जनात्मकलेखनेन पत्रकारतया च संस्कृते नूतनं जीवनं संचारयितुमस्य प्रयासाः सोद्देश्या अभूवन्। तदानीं हि संस्कृते विदुषां वर्गद्वयमभूत्। एको वर्गोऽभूत्

पाश्चात्यशोधपरम्पराप्रभावितानां विदुषां ये संस्कृतमन्यान्यप्राच्यभाषावत् क्लासिकलभाषां मत्वा तस्यामनुसन्धानस्य प्राच्यविद्याशोधस्य च क्षेत्रमेवाऽपश्यन्, आंगलभाषामाध्यमेन, इतरभाषासु वा तस्या दर्शनानां शास्त्राणां प्राचीन-साहित्यस्य गवेषणामनुवादान् विवेचनां चैव फलप्रदाममन्यन्त। इतरो वर्गोऽभूत्तेषां विदुषां ये संस्कृतं मातृभाषावद् भाषन्ते स्म, जीवितां जाग्रतीं च भाषाममन्यन्त, तस्यां मौलिकं सर्जनात्मकं च लेखनमनवरतं प्रचाल्यान्यान्याऽऽधुनिक-भारतीयभाषावत्तामप्याधुनिकीं भाषां मत्वा तस्यां पत्र-पत्रिकाणां प्रसारं, कविसम्मेलनाऽऽदीनामायोजनं च सार्थकमनुभवन्ति स्म, जीवित-भाषावत् प्रतिष्ठापयितुं च तामाजीवनं प्रायतन्त। भट्टमहोदया अस्यैव वर्गस्य विद्वांसोऽभूवन्।

अत एवासकृत्ते एवंविधाः स्थितीरन्वभवन् यदा पूर्वमुल्लिखितस्य वर्गस्य शोधविद्वद्भिः संस्कृतभाषा केवलं प्राचीना भाषा व्यपदिष्टा, तस्यां नूतन-साहित्य-निर्माणमकिंचित्करमिव च प्रतिपिपादयिषितम्। एवंविधासु स्थितिषु साऽऽटोपं, विविधैः प्रमाणैः प्रत्यक्षमनुभावितैश्च चमत्कारैरेते संस्कृतामाधुनिक-भाषावत् जीवितां साधयन्ति स्म, एवंविधानि बहून्यान्दोलनानि च परिचालयन्ति स्म यैः संस्कृतभाषा पूर्णतो जीविता सिध्येत्।

एवंविधेषु प्रयत्नेष्वेकोऽभून्नूतनविधासु, नूतनच्छन्दःसु, नूतनविषयेषु च साहित्यसर्जना, अपरोऽभूद्विविधनवयुगीन-साहित्यस्य विभिन्न-भाषाभ्यः संस्कृतेऽनुवादः, इतरश्च संस्कृतेऽभिव्यक्तिपद्धतीनां विस्तारः।

सन् १९३० वत्सरे वाराणस्यां संजातेऽखिल-भारतीय-संस्कृत-साहित्य-संमेलनस्याधिवेशनेऽनेन प्रदर्शितं यदेकं वाक्यं संस्कृते कथं परःशतं प्रकारैर्वक्तुं शक्यते। एतेषु कतिपयानि वाक्यानि नवंबर १९३९ मासस्य "सुप्रभातम्" (वाराणसी) इत्याख्ये मासिक-पत्रे 'संस्कृतभाषाया महत्त्वम्' इति शीर्षकान्तर्गतं प्रकाशितान्यपि। एतदतिरिक्तं तैः पत्र-पत्रिकासु लेखमालामाध्यमेन, विदुषामभिमतानि संकलय्य तानि च प्रकाश्य प्रत्यक्षमेकमान्दोलनमपि प्राचाल्यत यत्र "किं संस्कृतभाषा मृतभाषा?" इति प्रश्नमुद्भाव्य तस्या जीवितत्वमख्याप्यत। संस्कृत-रत्नाकर (जयपुर)

मासिकपत्रे (वर्षम् १२ अंक: ४. वर्षम् १४ अंक: ९) "गंधर्वसेनस्य स्वर्गयात्रा" इति शीर्षकेणैतद्विषयकं लेखमेकं लिखित्वा संस्कृतस्य मृतभाषात्व-प्रवादस्य नि:सारतामेते स्फुटीचक्रु:। वाराणस्या: शोधमासिके "सारस्वती सुषमा" इत्याख्ये (सप्तम-वर्षस्य द्वितीयेऽङ्के) "अपि नाम सेयमव्यावहारिकी" इति शीर्षकेण संस्कृत-भाषाया जीवितभाषात्वमेते साधयामासु:।

अस्मिन्नपि निबन्ध-संग्रहे हृदयावर्जक एषामेको निबन्ध: प्रकाश्यते यत्रैतै: प्रदर्शितं, प्रशिक्षितं च यदेकस्या अभिव्यक्ते: कथं परश्शतै: सुललितैर्वाक्यै: विविधशब्दप्रयोगपुरस्सरं संस्कृते संगुम्फनं कर्तुं शक्यते। नाऽस्ति तादृशी क्षमताऽन्यासु भाषासु।

एवं हि संस्कृते सर्जनात्मकस्य लेखनस्य, पत्रकारताया नूतनविधानामन्येषामभिव्यक्ति-प्रकाराणां च संस्कृतेऽवतारणस्यैकमुद्देश्य-मिदभूदेषां दृष्टौ यदनेन संस्कृतभाषा विश्वस्य भारतस्य चाऽन्यान्याऽधु-निकभाषाणां समष्टौ जीविताया आधुनिक्याश्च भाषाया रूपे प्रतिष्ठितं स्थानं लभेतेति।

**संपादनं टीकालेखनं च**– पत्रसम्पादनेन साहित्यिक-पत्रकारताक्षेत्रे भट्टमहोदयैर्नवीन-युगावतारणा यथा विहिता, तथैव प्राचीनग्रन्थपरिष्कारे संपादने, भूमिकालेखने, टिप्पणादिलेखने चापि सुमहत्परिश्रान्तम्। पूर्वमुल्लिखितं कादम्बर्या: संपादनं 'चषक'-टिप्पणीलेखनं, रसगंगाधरस्य पाठपरिष्कार:, "सरला"-टीकालेखनं, तदतिरिक्तं गीतगोविन्दस्य संपादनं पादटिप्पणी-लेखनञ्चानेन निर्णयसागरमुद्रणालयानुरोधेन विहितम्। ग्रन्थत्रयमिदं तस्मादेव मुद्रणालयात् प्रकाशितं संस्कृतविद्वत्सु बहूनि वर्षाणि लोकप्रियं सुप्रसृतं चाभूत्। सेवानिवृत्यनन्तरमनेन, स्वपूर्वजेन श्रीकृष्णभट्टेन लिखितस्यैति-हासिकमहाकाव्यस्य "ईश्वरविलास"-नामकस्य दुर्लभा पाण्डुलिपि: पुणेस्थभाण्डारकर शोध-प्रतिष्ठानादधिगत्य संपादिता, विस्तृतभूमिकया, ऐतिहासिक-टिप्पणीभि:, स्वनिर्मिताया "विलासिनी" टीकया च सह राजस्थानप्राच्यविद्याप्रतिष्ठानात् (जोधपुरात्) प्रकाशिता। श्रीकृष्णभट्ट-

लिखितायाः पद्यमुक्तावल्याः (मुक्तकसंग्रहस्य) टीका "गुणगुम्फनिका"ऽनेन लिखिता, ग्रन्थस्य संपादनं भूमिकया सह कृतं, ग्रन्थश्चायमपि राजस्थानप्राच्यविद्याप्रतिष्ठानात् प्रकाशितः। श्रीकृष्णभट्टस्य छन्दःशास्त्रग्रन्थो वृत्तमुक्तावल्याख्योऽपि पुणेस्थ-भाण्डारकरशोधसंस्थानादानाय्य सभूमिकोऽनेन राजस्थानप्राच्यविद्याप्रतिष्ठानात् प्राकाशि। शिलालेखरूपेण यानि काव्यानि देशस्य विविधेषु प्रान्तेषु सुरक्षितानि सन्ति, ताम्रपत्रादिरूपेण च यानि दानपत्राणि प्राचीनैर्नरेशैः सुललित-संस्कृतभाषायां विलेखितानि, तेषामध्ययनं संस्कृतपाठ्यक्रमे समावेशितमभूद्विभिन्नै राज्यैः। एवंविधस्याध्ययनस्य कृते पाठ्यपुस्तकरूपेण कतिपय-शिलालेखादीनां संकलनं, संपादनं टिप्पणीलेखनं च विधाय 'शिलालेखललन्तिका' नाम्नाऽयं ग्रन्थो निर्णयसागरात्प्राकाशि भट्टमहोदयैरिति पूर्वं सूचितमेव।

**नाट्यकृतयः**–काव्यलेखनेऽस्य नैपुण्यं तु विश्रुतमेव, अनेन महाराजसंस्कृतकालेजे साहित्य-विभागाध्यक्षपदमधितिष्ठता 'उत्तर-रामचरित' नाटकस्य मंचोपयोगि रूपान्तरणं विधाय तस्य नाटकस्य कालेजीयनाट्यसंघद्वारा रामप्रकाशाख्ये प्रेक्षागृहे मञ्चावतारणे सुमहद् योगदानमनुष्ठितम्, मध्ये मध्ये स्वनिर्मिताः संस्कृतगीतयोऽन्तर्वेशिताश्च [१९३१ ई. वर्षे]। ततश्च महाभारत-कथामाधारीकृत्य 'पाण्डव-विजया'-ख्य-नाटकस्य मञ्चोपयुक्ता पटकथा विविधप्राचीन-नाटकानामाधारेण रचिता, १९४० ई. वर्षे च तस्मिन्नेव नाट्यगृहे मंचिता च। जयपुरे आकाशवाणी-केन्द्रस्य प्रारम्भादनन्तरं तदधिकारिभिरनुरुद्धोऽसौ "मंजुला"ख्यं ध्वनिनाट्यं लिलेख। प्रसारितमिदं जयपुरीयाऽऽकाशवाणीकेन्द्रात् १६।१।५७ दिनाङ्के ८।८।५८ दिनाङ्के च।

**गद्य-रचनाः**–संस्कृतगद्येप्यस्य लेखनं विपुलमस्ति। शताधिकाः संस्कृत-लघुकथाः, दशाधिका उपन्यासाः, बहवो ललित-निबन्धाः, काल्पनिक-कथाः (फन्तासी), व्यङ्ग्यलेखाः, यात्रावृत्तानि, रूपककथाः प्रतीक-कथाः, विनोदाः, अन्यासु च विधासु लिखिताः सर्जनात्मकरचना गणनातीता एव। शोधलेखाः, समालोचनात्मक-लेखाः, साहित्यालोचनटिप्पण्यः, सामयिक-टिप्पणानि, समाचार-सारादयश्चापि भूरिशो व्यलेख्यन्तानेन।

वाराणसी-जयपुर-दिल्ली-प्रभृति-केन्द्रेभ्यः प्रकाशितेषु सर्वेष्वपि पत्रेष्वस्यैवंविधा रचनाः प्राकाश्यन्त यासां सूची सुदुष्करा साङ्गोपाङ्गत्वेन निर्मातुम्। तथापि बहुभिः शोधार्थिभिरेवं-विधरचनासु बह्वीनां सूचीकरणस्य प्रयत्नाः सन्त्यनुष्ठिताः। तत एवैवंविधा सूची शक्येत द्रष्टुम्।

**हिन्दी-रचनाः**—हिन्दीभाषायामप्यनेन बहवो ग्रन्थाः, लेखाः लघुकथाः, कविताश्चालिख्यन्त। वाल्मीकीये रामायणे विभीषण-शरणागति-प्रसङ्गमवलम्ब्य सुरुचिरं विवेचनात्मकं नूत्नमेव पन्थानमनुसरत् पुस्तकं 'शरणागति-रहस्य' नाम्नाऽऽनेन लिखितं यद् गीताप्रेसात् (गोरखपुर) प्रकाशितं लोकप्रियमभूत्। 'सरस्वती'-'माधुरी'-'कल्याण'-जयभूमि-राष्ट्रभाषा-प्रभृति-पत्र-पत्रिकासु लिखिता अस्य लेखा लघुकथाश्च हिन्दीजगत्यप्येनं सुविदितमकार्षुः। विविधेष्वभिनंदन-ग्रन्थेषु तत्सम्पादका एनमुपसृप्य विविधविषयकान् लेखानस्य गृहीत्वा प्रकाशितवन्तः।

**समाजे संमानः**—इदमभूत्स्वाभाविकं यदस्य सुदीर्घायै संस्कृतसेवायै परितुष्यद्भिर्विद्वद्भिः संस्थाभिः सर्वकारैश्च विविध-संमानोपाधिप्रदानद्वारा, सदस्यताप्रदानद्वारा चास्य संमाननं क्रियेत। अतः सेवाकाले एवायं वाराणस्यादि-विविधविद्या-केन्द्राणां परीक्षकः, प्रमुख-वक्ता, समारोहाणामध्यक्षो, मुख्यातिथिर्वा निर्धार्य समामान्त्रितः सादरम्। वाराणस्यां संपूर्णानन्द-संस्कृत-विश्वविद्यालयस्य स्थापनानन्तरं तस्य दीक्षान्तसमारोहावसरे समायोजित-स्याखिलभारतीय-कवि-सम्मेलनस्याध्यक्षपदे, अखिलभारतीयसंस्कृत-साहित्य-संमेलनेन समायोज्यमानानां कविसंमेलनानामध्यक्षपदे, राजस्थान-संस्कृत-साहित्य-संमेलनस्य बीकानेरनगरेऽधिविष्टस्य द्वितीयाधिवेशन-स्याध्यक्षपदे (१९५० ई.), विविधानामन्येषां समारोहाणां चाध्यक्षपदेऽसकृदयं सानुरोधं प्रतिष्ठापितोऽभूत्। राजस्थान-सर्वकारेण स्थापितायाः (सन् १९५७ ई.) साहित्य-अकादम्याः संस्थापकसदस्योऽयमभूत्। राजस्थान-राज्येन संस्कृत-शिक्षाया नीतिनिर्धारणाय नियुक्ताया विशेषज्ञसमितेः संस्कृत-मण्डलस्य च सदस्योऽयमभूत् (१९५२-१९६२)। बडौदाविश्वविद्यालयेन रससिद्धान्तानां काव्य-सिद्धान्तानां च विषये व्याख्यानानि विधातुमयमामन्त्रितोऽभूत् (१९५६

ई.)। उज्जयिन्यां कालिदाससमारोहस्य परम्परां प्रारब्धवती कालिदास-समितिरेनं सदस्यं निर्माय समारोहावसरे समायोज्यमानानां कविसंमेलनानामध्यक्षं च विधाय स्वगौरवमेधितवती। तस्याः प्रमुखः श्रीसूर्यनारायण-व्यासस्त्वेनम् "अभिनवकालिदास" पदेनैव संबोधयति स्म।

सन् १९३६ ई. वत्सरे जयपुरेऽधिविष्टेन (पंचविंशाधिवेशने) अखिलभारतीय-संस्कृतसाहित्य- संमेलनेनास्मै कविशिरोमणिः इत्युपाधिः, वाराणसीस्थ-भारतधर्ममहामण्डलेन साहित्यवारिधिरित्युपाधिः, बम्बईस्थ-वेल्लनाटीय-तैलङ्गसभया "कवि-सार्वभौम" इत्युपाधिश्चास्मै स्वर्णपदक-संमानोत्तरीयादिभिः सह सादरमुपायनीकृतः। १९६१ वत्सरे यदा राजस्थान-सर्वकारेण संस्कृतविदुषां कृते पुरस्कार-योजना प्रारभ्यत, तदा सर्वप्रथममस्मै त्रिसहस्रमुद्रात्मकं पुरस्कारं प्रदाय योजनाया अस्याः शुभारंभो विहितः। बह्वीभिः संस्थाभिर्मरणोत्तरमस्मै संमानाः प्रत्ताः।

**निःस्पृहताः**—पूर्वमुल्लिखितमेव यद् भट्टमहोदयो जयपुर-राज्येन प्रदत्तायाः प्रभूतसंपत्तेः स्वामी आसीदिति नानेनार्थकष्टमनुभूतं यौवने। बाल्ये तु सुमहतीमार्थिकीं विपत्तिं सोढ्वा, स्वमतिबलेन विविधान् संकटानुत्तीर्य स्वकीयं राजसंमानितं संस्थानमनेन कथं संकटादुद्धृतमित्यस्य वर्णनमनेन 'साहित्यवैभव' काव्ये कृतमस्ति। द्वारकानाथ-भट्टस्य सुतोऽयं यदा सुंदरलालभट्टस्य दत्तकोऽभूत्तदानेन ज्ञातं यत् समग्राऽपि भूसंपत्तिः पूर्वजैः बन्धकतया उत्तमर्णानामधिकारे निक्षिप्ताऽस्ति; न कोऽप्यायः, ऋणं वर्धते यतस्तस्य कुसीदमनुदिनं प्रवर्धते। निःसन्तानं दिवङ्गतेन श्रीसुंदरलालेन, अन्यैश्च स्वेच्छाचरणानुरागिभिरनवधानिभिः पूर्वजैः स्वकीयकार्यार्थं विभिन्नेभ्यो जनेभ्यः ऋणानि गृहीतान्यभूवन्, तस्यायं परिणामोऽभूत्। प्रबन्धका भ्रष्टाचरण-परवशा मध्ये सुबहु वित्तं भुञ्जते स्म। अनेन सर्वापि व्यवस्था कैशोर्यादेव सावधानं परीक्षिता, प्रबन्धो निजसात् कृतः, भूसंपत्ति-र्बन्धकत्वान्मोचिता, ऋणं परिशोधितम्, आयः संवर्धितः। एवं प्रायस्त्रिंश-द्वर्षात्मके वयस्ययं स्व-निर्भर ऋणमुक्तश्चाजायत। तदनन्तरमधिकेनोत्साहेन साहित्यसेवापरः समजायत।

एवं च साहित्यसेवातः पुस्तकलेखनादिकार्येभ्यश्च नायं कदापि किंचन लिप्सुरभूत्। एतस्य परिणामोऽपि तथाविध एवाभूत्। विपुलग्रन्थ-लेखककेनाप्यनेन नैकमपि रूप्यकं कस्मादपि प्रकाशकाद् 'रॉयाल्टी' (स्वामिस्व)रूपेणाधिगतम्। निर्णयसागर-मुद्रणालयः संपादनस्य नाममात्रं किंचन पारिश्रमिकं प्रारंभ एव ददाति स्म, न रायल्टीं निर्धारयति स्म। राजकीयपाठ्पुस्तक-मंडलेन यत् संस्कृत-पाठ्यपुस्तकमनेन लेखितम्, तस्य पारिश्रमिक-रूपेण सकृदेकशः कश्चन राशिरवश्यमस्मै प्रत्तोऽभूत् 'संकृतसुधा'ख्य- पाठ्यपुस्तकस्य लाभस्तु यः कोऽप्यभूत्, मध्यस्थव्यक्तिभिः सानन्दं भुक्तः।

**परिवेशः परिसरश्च**- यस्मिन् युगे भट्टमहाभागैराजन्म संस्कृतसेवाव्रतं निरूढं, तद् युगमेवंविधानां निःस्वार्थ-सरस्वती-सेवकानामेवाऽभूत्। अनवरतसाहित्य-सर्जनासत्रमेतदेभिर्न कस्मैचिल्लाभलोभाय, न वा, यशोलिप्सया, न च कस्यचन बन्धनेन प्रेरणया वा परिचालितम्, आसीत्सा काचनान्तःप्रेरणैव यया खल्वेभिर्निश्चितमासीत् यत् प्रतिदिनं संस्कृते किंचन लेखनं विना भोजनं नैव करणीयम्। वाराणस्यां जयपुरेऽन्येषु च संस्कृतविद्याकेन्द्रेष्वभूवँस्तदानीमेवंविधा एव निःस्वार्थ-संस्कृतसेवका मनीषिणो येषां पुण्यान्यद्यास्माभिरुपभुज्यन्ते। भट्टमहाभागानां ज्येष्ठतनूजत्वसौभाग्येन ममाऽप्यभूदवसरस्तदानीन्तनानामेवंविधानां मनीषिणां दर्शनस्य, तेषां वैदुष्य-सुरभितासु चर्चागोष्ठीषु प्रवेशस्य, यासु न राजनीतिर्न व्यवसायो न वाऽन्यविधं किंचन वस्तुजातमभूच्चर्चाविषयः, संस्कृत-संबन्धिन्यश्चर्चाः, शास्त्र-सन्दर्भ-संवलिता एव विनोदाः, काव्यालापसन्दानिताः परिहासा-एवंविधा एव व्यासङ्गास्तेषां समवाये, सग्धिषु, जलविहारो-पवनविहारादिषु सर्वविधेषूत्सवावसरेषु चाभूवन्नित्यधुना स्मरामि। कथं युगमेवेदानीं विपरिवृत्तम्। अस्तां तावत्।

भट्टमहोदयानां सुहृत्परिकरे जयपुरीयाः स्वामिलक्ष्मीराम-महाभागा आयुर्वेदमार्तण्डाः, म.म. पं. गिरिधरशर्माणः, पं. चंद्रधरगुलेरिणोऽनुजाः पं. सोमदेवगुलेरिणः, राजगुरु-चन्द्रदत्तमैथिलाः, पं. सूर्यनारायणशर्माणः, प्रशासकाः

श्री श्यामसुन्दरपुरोहिताः, वेदविज्ञाः पं. मोतीलालशर्माणः, पं. गिरिजाप्रसाद-द्विवेदाः, कलिकातास्थाः (शेखावाट्यभिजनाः) श्रीझाबरमल्लशर्माणः, पुणेस्थाः डा.पी.के. गोडेमहोदयाः, बम्बईस्था गोस्वामिगोकुलनाथाः, पं. पुरुषोत्त-मचतुर्वेदाश्च, वाराणसेया नारायणशास्त्रिखिस्तेमहोदयाः, रायकृष्णदासमहोद-याश्च, वाङ्गा असितकुमारहालदाराः (प्रसिद्धाश्चित्रकारा ये जयपुरीयचित्रकला-कालेजस्याध्यक्षा अप्यभूवन्), दाक्षिणात्याः पं.पट्टाभिरामशास्त्रिणः, झालरापाटनस्था नवरत्नगिरिधरशर्माणः अन्ये च विभिन्नेषु प्रान्तेषु स्थिता विद्वांसः परिगणयितुं शक्यन्ते।

एतेषां शिष्येषु, स्व.गणेशरामशर्माणः, स्व.पं. वृद्धिचन्द्रशास्त्रिणः, स्व॰ वैद्यमुकुन्ददेवाः स्व. पं. गोपालनारायणबहुरा, स्व. दीनानाथत्रिवेदी (मधुपः), उद्योगपतिः, स्व॰ श्रीकन्हैयालालतिवाडी, प्रशासकाः स्व. श्रीशेरसिंहद्वारकानाथपुरोहितप्रभृतयः, शिक्षकाः स्व. श्रीराधागोविन्द- शर्मप्रभृतयः, विद्वांसः प्रो. स्व. प्रवीणचन्द्रजैन, स्व. डॉ. कन्हैयालालसहल, डॉ. नागरमलसहल, पं. प्रभुनारायणसहृदय-राष्ट्रपति सम्मानित पं. जगदीशर्ममेहताबचन्द्र-शर्मप्रभृतयः, जननेतारः श्रीसिद्धराजढड्ढा-पूर्णचन्द्रजैन-जवाहरलालजैन-युगलकिशोरचतुर्वेदी-हीरालालशास्त्रिप्रभृतयो बहवोऽभूवन् ये महाराजा- कालेजाख्ये पाश्चात्य-पद्धत्यनुसारिणि महाविद्यालयेऽथवा महाराजा- संस्कृतकालेजाख्ये प्राच्यपद्धत्यनुसारिणि महाविद्यालये वा गृहे वा भट्टमहोदयात्संस्कृतं साहित्यशास्त्रं वाऽधीतवन्तः। हन्त! प्रबलस्य कालस्य दुर्दम्यः प्रभावोऽद्यत्वे सर्वानिमांल्लोकान्तरं प्रापयामास।

आसां पंक्तीनां लेखकोऽपि तत्सुतत्वेन तेभ्यो न केवलं काव्यशास्त्रकाव्यरचनान्यायवैशेषिक-सांख्य-पुराणेतिहासादिविषयान् अपि तु ब्रजभाषाकाव्य-हिन्दी-कवितादि- विषयानपि तदाशीर्वचोभिः स्नेह-सम्भारेण च सहाऽध्यगीष्ट, स एव चाऽऽशीः-पुण्यराशिरद्य तस्य समग्रो निधिः।

**देवर्षि कलानाथशास्त्री**

# भट्टश्रीमथुरानाथशास्त्रिणां कृतयः

## प्रकाशिता ग्रन्थाः–

संस्कृते :– मौलिक ( स्वोपज्ञ ) रचनाः

(१) साहित्यवैभवम् (सरसानां विविधविषयकमुक्तकानां विभिन्नच्छन्दो-बद्धानां संकलनम्) प्रकाशकः, लेखकः स्वयम्। १९३० ई.

(२) जयपुरवैभवम् (संस्कृते जयपुरवर्णनात्मकं काव्यम्) प्रकाशकः, लेखकः स्वयम्, (१९४७)

(३) गोविन्दवैभवम् (भक्ति-काव्यम्) प्रकाशकः गीताप्रेस, गोरखपुरम्, १९५७

(४) संस्कृतसुबोधिनी (संस्कृत-स्वयंशिक्षकं प्राथमिकपाठ्यपुस्तकम्) भागद्वये, प्रकाशको लेखकः स्वयम् १९३९

(५) संकृतसुधा (संस्कृत-पाठ्यपुस्तकम्) प्रकाशकः राजस्थान पब्लिसिटी सिंडीकेट जयपुर १९५७

(६) सुलभसंस्कृतम् (संस्कृतस्य पाठ्यपुस्तकम्) प्रकाशकं राजस्थानराज्य- पाठ्यपुस्तकमंडलम् जयपुर १९५८

(७) गीतिवीथी (गेय-संस्कृतगीतीनां संकलनम्) लेखकेन प्रकाशिता १९३०

(८) आदर्शरमणी (संस्कृते उपन्यासः) लेखकेन प्रकाशितः १९०६

(९) प्रबन्धपारिजातः (निबन्धाः) केन्द्रीयसंस्कृतविद्यापीठ, जयपुरम् १९८८

(१०) गीर्वाणगिरागौरवम् (संस्कृतस्य भाषाशास्त्रीय महत्त्वं सूचयन् प्रबन्धः) केन्द्रीय संस्कृत विद्यापीठ, जयपुरम् १९८८

**अनुवादः, सम्पादनं टीका च–**

(११) संस्कृतगाथा-सप्तशती (गाथासप्तशत्याः समच्छन्दोऽनुवादः संस्कृते, व्यङ्ग्यसर्वङ्कषा टीका, भूमिका, संपादनं च) प्रकाशकः निर्णयसागरप्रेस बंबई १९३३

(१२) गाथारत्न-समुच्चयः (शताधिकानां प्राकृत-गाथानां, तासां संस्कृताऽनुवादस्य च समुच्चयः) लेखकेन प्रकाशितः १९३५

**संपादिता व्याख्याताश्च ग्रन्थाः**

(१) रसगंगाधरः (सरला टीका)प्रका. निर्णयसागर प्रेस बंबई (१९३९-१९४६)

(२) कादम्बरी (चषकटीका) १९३९-१९४१ नि.सा. प्रेस बंबई

(३) शिलालेख-ललन्तिका (संस्कृते शिलालेखानां संकलनम्, व्याख्या भूमिका च) १९४१ बंबई

(४) गीतगोविन्दम् (संपादनं, पादटिप्पणी च) १९३७

(५) ईश्वरविलासः श्रीकृष्णभट्ट-कृतः (संपादनम् विलासिनी टीका, भूमिका, टिप्पण्यश्च) प्रका. राजस्थानप्राच्यविद्याप्रतिष्ठानम्, जोधपुर १९५८

(६) पद्यमुक्तावली : श्रीकृष्णभट्टकृता, (संपादनं, गुणगुंफनिका टीका, भूमिका च)

प्रका. राजस्थानप्राच्यविद्याप्रतिष्ठानम् जोधपुर १९५९

(७) वृत्तमुक्तावली-श्रीकृष्णभट्ट-कृता (संपादनं भूमिका च) १९६२

(८) संस्कृत-रत्नाकर मासिकस्य शिक्षाङ्कः विशेषांकः) १९४०

(९) " " आयुर्वेदाङ्कः " १९३४

(१०) " " वेदाङ्कः " १९३६

(११) " " दर्शनाङ्कः " १९४५

**प्रकाशिता ग्रन्थाः हिन्दीभाषायाम्**

(१) शरणागतिरहस्य, गीताप्रेस गोरखपुर (१९३७)

(२) व्रज-कवितावीथी, लेखकः स्वयम् (१९४७)

(३) चतुर्थीस्तवः " " (१९३५)

(४) पं. चन्द्रदत्तमैथिलः जीवनपरिचय, अभिनंदन समिति जयपुर (१९४०)

**अप्रकाशितो ग्रन्थः ( हिन्दीभाषायाम्, अनुवादः )**

स्तुति-कुसुमांजलिः–जगद्धरविरचिताः हिन्दी अनुवाद

**संस्कृते अप्रकाशिता ग्रन्थाः**

(१) भारतवैभवम् (भारतस्यैतिहासिकमन्यच्च महत्त्वम्)

(२) महाकविर्बिल्हणः (बिल्हणस्य जीवनं, कृतिपरिचयश्च) "स्वरमंगला" पत्रिकायां, शोधप्रभापत्रिकायाम्, अस्मिन् संग्रहे च प्रका.

(३) निबन्धविद्या (निबन्ध-लेखनकला)

(४) समस्या-सन्दोहः (अंशतः "संस्कृतप्रतिभा"ख्य-संस्कृतपत्रिकायां साहित्य अकादमी नई दिल्लीतः प्रकाशितः) समस्यापूर्तयः

(५) कथा-निकुञ्जः

(६) रसगंगाधर-टीका (विस्तृता)

(७) मंजुला (ध्वनिनाट्यम्) (मञ्जुनाथगद्यगौरवम् इत्याख्ये ग्रन्थे प्रका.)

# भट्टश्रीमथुरानाथशास्त्रिणां कृतित्वमधि-कृत्य प्रकाशिता ग्रन्थाः

१. **संस्कृत के युगपुरुष मंजुनाथ** (जीवनं कृतित्वं च, सानुवादा काव्यकृतिः, निदर्शनानि च) ले. देवर्षि कलानाथ शास्त्री, प्रका. मंजुनाथ स्मृति संस्थान जयपुर २००४

२. **मञ्जुनाथ-वाग्वैजयन्ती** (निबन्धसंग्रहः) संपा. देवर्षि कलानाथ शास्त्री, ज. रा. राजस्थान संस्कृत विश्वविद्यालयः, जयपुर

३. **आधुनिक संस्कृत साहित्य और भट्टमथुरानाथ शास्त्री** लेखक डॉ. सुनीता शर्मा प्रका. रचना प्रकाशन जयपुर

४. **मंजुनाथ-वाग्वैभवम्** (विदुषां निबन्धानां संग्रहः) संपा. डॉ. गङ्गाधर भट्ट प्रकाशक : राजस्थान संस्कृत अकादमी, जयपुर (पृ. क-झ, १-२१६) सन् १९९०

५. **श्रीमथुरानाथशास्त्रिणः कृतित्व-समीक्षणम्** (निबन्ध संकलन) संपा. डॉ. प्रभाकरशास्त्री प्रका. राजस्थान संस्कृत अकादमी, जयपुर (पृ. ८+१=१-९०) सन् १९९५

६. **मंजुनाथगद्यगौरवम्**-संस्कृत विभाग, सागर विश्वविद्यालयस्य प्रख्या ग्रन्थमालायाः षष्ठो ग्रन्थः (स्पन्दः) ग्रन्थमाला सम्पा. डॉ. राधावल्लभ त्रिपाठी, स्पन्द संपादकः डॉ. रमाकान्त पाण्डेयः, प्रका. प्रतिभा प्रकाशन, दिल्ली, सन् २००४

**विशेषाङ्काः**

४. **भट्ट-स्मृति-विशेषाङ्कः** भारती संस्कृतमासिकी वर्ष १४ अंक १ संपा. श्रीहरि शास्त्री, भारती भवन, जयपुर सितम्बर, १९६४

५. **भट्टजन्मशताब्दी विशेषाङ्कः-स्वरमंगला** संस्कृतत्रैमासिकी संपा. डॉ. गङ्गाधर भट्ट प्रका. राजस्थान संस्कृत अकादमी, जयपुर। सन् १९९०

**शोधप्रबन्धाः**

६. **भट्टश्रीमथुरानाथशास्त्री व्यक्तित्व एवं कृतित्व** (पी-एच. डी कृते शोधप्रबन्धः) शोधकर्त्री: डॉ. उषा भार्गव, राजस्थान विश्वविद्यालय, शोधनिर्देशक डॉ. प्रभाकर शर्मा शास्त्री, सन् १९७५

७. **भट्टमथुरानाथशास्त्रिकृत समस्यासन्दोह** : एमफिल कृते शोधप्रबन्धः, डॉ. दीपा पन्त, शोधनिदेशक : डॉ. गंगाधरभट्ट, राजस्थान विश्वविद्यालय, १९८०-८१

८. **संस्कृतमुक्तकपरम्परा को भट्टजी का योगदान** : पी-एच. डी कृते: शोधकर्त्री कमलेश कौशिक जोशी, शोधनिर्देशक: डॉ. गंगाधर भट्ट (राजस्थान विश्वविद्यालय सन् १९८१)

९. **संस्कृतनिबन्ध साहित्य में भट्टजी का अवदान**-(पी-एच.डी. कृते) शोधकर्त्री डॉ. सुनीता शर्मा, शोधनिर्देशक डॉ. शिवसागर त्रिपाठी, (राजस्थान विश्वविद्यालय सन् १९९३)

१०. **भट्टजी का जयपुरवैभवम्** : शोधकर्त्री - डॉ. पुष्पा जैन (गुप्ता) राजस्थान विश्वविद्यालय

११. **गोविन्दवैभवम्-समीक्षात्मक राजस्थान विश्वविद्यालयः विवरणः** डॉ. कमलेश जोशी (कौशिक) एम. फिल. कृते, शोधनिर्देशक : डॉ. गंगाधर भट्ट सन् १९७८

१२. **भट्टजी की पत्रकारिता को देन** : एम. फिल. कृते, डॉ. राजेन्द्रसिंह आर्य शोधनिर्देशक डॉ. गंगाधर भट्ट, राजस्थान विश्वविद्यालय, सन् १९९३

१३. **गीतिकाव्यपरम्परायां गोविन्दवैभवकाव्यस्य समीक्षणम्** : शोधार्थी गिरिराज शर्मा, निर्देशक डॉ. रमाकान्त पाण्डेय, राष्ट्रिय संस्कृत संस्थान, जयपुर परिसर, त्रिवेणीनगर, जयपुर।

**लेखाः–**

**भट्टमथुरानाथशास्त्रिणः साहित्यसाधना** (डॉ. गंगाधर भट्ट) (राजस्थानीयम् अभिनवसंस्कृत साहित्यम्, प्रथम खण्ड, पृ. ६६), राजस्थान संस्कृत अकादमी, जयपुर सन् १९९०

**संस्कृते भट्टमथुरानाथशास्त्रिणां नवाः शैल्यो नवाः प्रयोगाश्च**
देवर्षि कलानाथ शास्त्री,

**संस्कृतसाहित्ये देवर्षिभट्टमथुरानाथशास्त्रिणां योगः**
डॉ. ब्रह्मानन्द शर्मा

**संस्कृतपत्रकारितायां भट्टमथुरानाथशास्त्रिणो योगदानम्**
डॉ. गंगाधर भट्ट

**भट्टमथुरानाथशास्त्रिविरचितं गोविन्दवैभवम्**
डॉ. राजेश्वरी भट्ट

**देवर्षिमथुरानाथशास्त्रिणां लघुकथासाहित्यम्**
डॉ. प्रभाकरशास्त्री

**दो लेखकों के नवसर्जनात्मक प्रयोग** (शोधलेख): कलानाथशास्त्री (सर्वे 'नवोन्मेषः' शीर्षके शोधग्रन्थे प्रकाशिताः, प्रकाशक : राजस्थान संस्कृत अकादमी, जयपुर, संपादक डॉ. रामचन्द्र द्विवेदी सन् १९९०)

**आधुनिक संस्कृत साहित्य में भट्ट मथुरानाथ शास्त्री के**

**नवसर्जनात्मक प्रयोग** (शोधलेखः देवर्षि कलानाथशास्त्री) **राजस्थान की सारस्वत साधना** शोधग्रन्थे प्रकाशितः, प्रकाशक राजस्थान संस्कृत अकादमी, सन् १९९४

**भट्टमथुरानाथशास्त्रिणां विलक्षणं कृतित्वम्** (शोधलेखः) देवर्षिकलानाथशास्त्री, 'सागरिका' त्रैमासिक पत्रिकायां (सागर, मध्यप्रदेश) वर्ष ३५ अंक ३-४ सन् २००० प्रकाशितः तथा प्रो. रामजी उपाध्याय अभिनन्दन ग्रंथे संकलितः सम्पादक-प्रो. राधावल्लभ त्रिपाठी, डॉ. रमाकान्त पाण्डेय।

मञ्जुनाथग्रन्थावलिः (पञ्चसु भागेषु) सम्पादकौ : देवर्षिकलानाथ-शास्त्री, डॉ. रमाकान्तपाण्डेयश्च, प्रकाशन राष्ट्रियसंस्कृतसंस्थान, नई दिल्ली (२००८-२०११)।

# भट्टश्रीमथुरानाथशास्त्रिणां कथा-साहित्यम्

| क्र. कथा | पत्रिका |
|---|---|
| **(क) ऐतिहासिक-कथाः–** | |
| १. अलक्ष्येन्द्रश्च दस्युश्च | भारती, ८.२ |
| २. वीरबालकः | संस्कृत रत्नाकर, ७-८ |
| ३. वीरपरीक्षा | संस्कृत रत्नाकर, ८.८ |
| ४. धन्योऽसि धर्मवीर | संस्कृत रत्नाकर, ८.१२ |
| ५. अत्याचारिणः परिणामः | संस्कृत रत्नाकर, ९.१ |
| ६. सिंहदुर्गे सिंहवियोगः | संस्कृत रत्नाकर, ९.३ |
| ७. पुरुराजस्य पौरुषम् | संस्कृत रत्नाकर, ९.५ |
| ८. अङ्गुलिमालः | संस्कृत रत्नाकर, १०.१ |
| ९. पृथ्वीराजपौरुषम् | संस्कृत रत्नाकर, १०.२ |
| १०. आल्हा च, ऊदलश्च | संस्कृत रत्नाकर, १०.४ |
| ११. मातृसेवायां चिरममरे द्वे बलिदाने | संस्कृत रत्नाकर, १०.६ |
| १२. सामन्तसङ्ग्रामः | संस्कृत रत्नाकर, १०.८ |
| १३. भारतध्वजः बालवीरः | संस्कृत रत्नाकर, १०.१०-११ |
| १४. अनुतापः | संस्कृत रत्नाकर, ११.२-३ |
| १५. चन्द्रहासः | संस्कृत रत्नाकर, ११.४ |
| १६. कृत्रिमबूँदी | संस्कृत रत्नाकर, ११.६ |

| | |
|---|---|
| १७. वीरवाणी | संस्कृत रत्नाकर, १२.१२ |
| १८. प्राणानां भाषा | संस्कृत रत्नाकर, १२.६ |
| १९. विजयिघण्टा | संस्कृत रत्नाकर, १२.१०-११ |
| २०. कर्णश्चाऽर्जुनश्च | संस्कृत रत्नाकर, १३.६ |
| २१. सत्यो बालचरः | संस्कृत रत्नाकर, १२.९ |
| २२. धन्यो भारतीयवीरः | संस्कृत रत्नाकर, १३.१२ |
| २३. पुरुषपरीक्षा | |

**( ख ) सामाजिक-कथाः–**

| | |
|---|---|
| २४. असमसाहसम् | संस्कृत रत्नाकर, ३-४-७ |
| २५. पश्यतोहरः | संस्कृत रत्नाकर, १-२-५ |
| २६. सरला | संस्कृत रत्नाकर, ७.११ |
| २७. एकवारं दर्शनम् | संस्कृत रत्नाकर, १.४-५ |
| २८. दयनीया | संस्कृत रत्नाकर, २.४ |
| २९. अनादृता | संस्कृत रत्नाकर, ३.९ |
| ३०. प्रत्युत्पन्नमतिर्हालिकः | संस्कृत रत्नाकर, ११.११ |
| ३१. अद्भुतचिकित्सा | संस्कृत रत्नाकर |
| ३२. प्रतिशोधः | भारती ३.१० |

**( ग ) प्रणय-कथाः–**

| | |
|---|---|
| ३३. प्रेम्णो विजयः | संस्कृत रत्नाकरः ९-१० |
| ३४. परीक्षा | संस्कृत रत्नाकरः १०.७ |
| ३५. निराशप्रणयः | संस्कृत रत्नाकरः ७-३-७ |
| ३६. प्रेम्णः प्रतिदानम् | संस्कृत रत्नाकरः ३.४ |

**( घ ) प्रतीकात्मक-कथाः–**

३७. बालकभृत्यः संस्कृत रत्नाकरः २.७-८

३८. न कुहचिद् गुणतत्त्ववेदी संस्कृत रत्नाकरः ९.९

**( ङ ) विनोदात्मक-कथाः–**

३९. मिस्टरस्य गीताज्ञानम् संस्कृत रत्नाकरः ७.१२

४०. चपण्डुकः संस्कृत रत्नाकरः ८-५-६

४१. शिष्या संस्कृत रत्नाकरः ८.७

४२. फाल्गुनगोष्ठी संस्कृत रत्नाकरः ९.७

**( च ) मनोवैज्ञानिक-कथाः–**

४३. विषमा समस्या संस्कृत रत्नाकरः ११.८

**( छ ) विविधविषयक-कथाः–**

४४. करुणा कपोती च युवती च संस्कृत रत्नाकरः १३.८

४५. मृगयुः संस्कृत रत्नाकरः ८.२

४६. दानी दिनेशः संस्कृत रत्नाकरः ९.६

४७. वीरो बालचरः संस्कृत रत्नाकरः ९.१२

४८. धर्म-धनयोर्युद्धं धर्मस्य विजयश्च संस्कृत रत्नाकरः ९.११-१२

४९. परीक्षा संस्कृत रत्नाकरः १२.१

५०. न्यायाधिकारी संस्कृत रत्नाकरः १२.५-६

५१. द्वे स्पर्धे संस्कृत रत्नाकरः १२-१२

**मंजुनाथगद्यगौरवे प्रकाशिता रचनाः–**

**उपन्यासाः**

१. आदर्शरमणी

२. मोगलसाम्राज्यसूत्रधारो महाराजो मानसिंहः

३. भक्तिभावनो भगवान्

**कथाः–**

१. दयनीया

२. चतुरवंचकः

३. प्रेम्णः प्रतिदानम्

४. अनादृता

५. ममाध्यापनम्

६. जले ज्वाला

७. भाग्यरेखा

८. क्षत्रियशोणितम्

९. शस्त्रपाणिः क्षत्रियाणी

**शोधनिबन्धाः–**

१. काव्यलक्षणं तद्विषये विभिन्नमतानि च

२. रसस्वरूपं विभिन्ना रससिद्धान्ताश्च (अंशतः)

३. कश्मीरकमहाकविर्बिह्लणस्तस्य काव्यं च (अंशतः)

**रेडियो नाटकम्–**

१. मंजुला

# भट्टश्रीमथुरानाथशास्त्रिणां निबन्ध-साहित्यम्

| क्रमांक | शीर्षक | पत्रिका | वर्ष | अंक |
|---|---|---|---|---|
| **वर्णनात्मका निबन्धाः** | | | | |
| १. | अहं मोहमय्याम् | सं रत्नाकर प्रा. | ५ | १,२ |
| २. | चीन-देशे धर्म-चर्चा | सं रत्नाकर प्रा. | ६ | ५,६ |
| ३. | कार्नेगी-कारू-विद्यालयः | सं रत्नाकर प्रा. | ७ | २ |
| ४ | संस्कृत-सेवा-कुञ्जः | सं रत्नाकर | ८ | ९,११,१२ |
| ५. | स्वतन्त्रताया मंगलप्रभातम् | सं रत्नाकर | १२ | ३ |
| ६. | भारतस्य राष्ट्रीयपताका | सं रत्नाकर | १२ | २ |
| ७. | व्रज-विहारिणा विहारिणो द्वन्द्वम् | सं रत्नाकर | १३ | ११ |
| ८. | सत्यम् | भारती | ३ | २ |
| ९. | परोपकारः | भारती | ३ | ५ |
| १०. | कालिकातातः प्राचीनसाहित्य-प्रकाशनम् | भारती | ८ | ८ |
| ११. | हिमालयांचले मणिकूट-पर्वतः | भारती | ९ | ८ |
| १२. | भारतमिदम् असीम-मूल्येनाऽपि निजसीम्नो रक्षां कुर्यात् | भारती | ९ | ९ |
| १३. | सोवियतसंघे संस्कृतस्याध्ययनम् | भारती | १० | ६ |
| १४. | राजधान्यां संस्कृतोन्नतेः प्रयत्नः | भारती | १० | १० |
| १५. | सोमनाथे यवनाक्रमणम् | सं. रत्नाकर | ९ | १० |

| | | | |
|---|---|---|---|
| १६. अमरकण्टकम् | सं. रत्नाकर | १२ | ७ |
| १७. स्वागतं महाराजस्थानस्य | सं. रत्नाकर | १३ | १० |
| १८. मरुस्थल-निरोधस्य योजना | भारती | ३ | ८ |
| १९. भगवतो बुद्धस्याऽवशेषोपरि लिच्छविनिर्मितः स्तूपः | भारती | ८ | ८ |

**विवरणात्मका निबन्धाः–**

| | | | |
|---|---|---|---|
| १. प्रभातवायुः | सं. रत्नाकर प्रा. | ६ | ५, ६ |
| २. भारतपर्यटनम् | सं.रत्नाकर प्रा. | ७.६, ८,११.१ | |
| ३. वर्तमाने युरोपीय-महायुद्धे भारतीयः | सं. रत्नाकर प्रा. | ९८,९ | |
| ४. कांकरोली-यात्रा | सं. रत्नाकर प्रा. | ९ | ७ |
| ५. विक्रमार्कस्य द्विसहस्त्राब्दी | सं. रत्नाकर प्रा. | १० | ३ |
| ६. महायुद्धस्य जगति जाज्वल्यमानः | सं. रत्नाकर प्रा. | १२ | २ |
| ७. प्राचीनाऽऽर्याणां वस्त्राणि | सं. रत्नाकर प्रा. | १२ | ९ |
| ८. प्राचीनभारते पोत-निर्माणकला | भारती | ३ | ८ |
| ९. आर्याणां होलिकामहोत्सवः | भारती | ५ | ५ |
| १०. हिमालयांचले बद्रीनाथयात्रा | भारती | ६ | १२ |
| ११. आर्याणाम् उत्सवसमाजश्च दीपावली च | भारती | ७ | १ |
| १२. होलिकामहोत्सवः | भारती | १२ | ९ |

**विचारात्मका निबन्धाः–**

| | | | |
|---|---|---|---|
| १. दीपावली | सं. रत्नाकर | ७. | ८ |
| २. हिन्दुविश्वविद्यालयः | सं. रत्नाकर | ७ | ८,९ |
| ३. एशियाप्रदेशे अदृष्टवादः | सं. रत्नाकर | ७ | ९,१०,११ |
| ४. भारतीयानां राजभक्तिः | सं. रत्नाकर | ७ | ११ |

| | | | |
|---|---|---|---|
| ५. चलच्चित्रपटे समुद्रगर्भस्य | सं. रत्नाकर | १ | ११ |
| रोमाञ्चकारीणि दृश्यानि | भारती | ३ | १२ |
| ६. वर्तमानयुगस्य परीक्षाप्रणाली च संस्कृतशिक्षा च | सं. रत्नाकर | २ | १,२,३ |
| ७. दीर्घजीवनार्थमायोजनानि | सं. रत्नाकर | ८ | ४ |
| ८. निबन्धलेखस्य विराट् प्रवाह: | सं. रत्नाकर | ३ | २,३,४,५ |
| ९. संस्कृतपण्डितान् क्व निनीषन्ति शिक्षाधिकारिण:? | सं. रत्नाकर | ९ | १२ |
| १०. प्रिये मधुरवाणि! | सं. रत्नाकर | ९ | ३ |
| ११. भारते संस्कृतभारती राष्ट्रभाषा | सं. रत्नाकर | ९ | ४ |
| १२. हंसवाहना सरस्वती मयूरवाहना कथं जाता (शोध लेख:) | सं. रत्नाकर | १० | ४ |
| १३. पशुपक्षिषु मनुष्यस्य सभ्यता | सं. रत्नाकर | १० | ५ |
| १४. संस्कृतपण्डिता: पश्यन्तु | सं. रत्नाकर | १० | ६ |
| १५. सम्राडवरङ्गजीवस्य निजपुत्रं प्रति पत्रम् | सं. रत्नाकर | १० | १०,११ |
| १६. संस्कृतं च तच्छिक्षा च | सं. रत्नाकर | १० | १०,११ |
| १७. संस्कृतभाषा च प्रारम्भिकी शिक्षा च | सं. रत्नाकर | ११ | ७ |
| १८. संस्कृत-शिक्षा-परिष्कार: | सं. रत्नाकर सं. | ११ | ७ |
| १९. साहित्यस्य सत्ता मानवस्य महत्ता | सं. रत्नाकर | १२ | ८ |
| २०. संस्कृतभाषा च तदुपजीविनश्च | सं. रत्नाकर | १३ | १,२ |
| २१. भारतस्य का स्यात् संस्कृति:? | सं. रत्नाकर | १३ | २ |
| २२. संस्कृत-पण्डिता: | सं. रत्नाकर | १३ | ३,४ |
| २३. संस्कृतस्य संकटम्, सेवकानां साम्प्रतिंक कर्तव्यम् | सं. रत्नाकर | १७ | २,३ |

| | | | |
|---|---|---|---|
| २४. वर्तमान-युगस्यापेक्षा संस्कृतभाषा च | सं. रत्नकर | १७ | ६, ७ |
| २५. संस्कृत-भाषा-विषये संस्कृतज्ञानां कर्तव्यम् | भारती | ५ | ४, ५ |
| २६. ९३ कोटिमुद्राणां करभारो भारतीयानामुपरि | भारती | ७ | ९ |
| २७. विद्यायाः महिमा | भारती | ८ | १ |
| २८. नवसाहित्य-निकषः | भारती | ८ | ४, ५ |
| २९. बालशिक्षां प्रति पितुः कर्तव्यम् | भारती | ८ | ७ |
| ३०. आंग्लसंस्कृतिरपसार्यताम् | भारती | ८ | ८ |
| ३१. संस्कृतं राजभाषाऽवश्यं भवेत् | भारती | ८ | ८ |
| ३२. काश्मीर-विषये पकिस्तानस्य दृष्टिकोणः | भारती | ८ | ८ |
| ३३. समस्त-संसारः संस्कृतं प्रत्युन्मुखाः किन्तु भारतीया? | भारती | ९ | ६ |
| ३४. चरित्र-बलं विना देशस्य संपूर्णा अपि योजना निष्फलाः | भारती | १९ | १ |
| ३५. श्रीहनुमतः आदर्शचरितम् | भारती | १ | १ |
| ३६. अन्येषामुषकारको भवेत् | सं. रत्नाकर | ९ | ११ |

**समीक्षात्मका निबन्धाः**

| | | | |
|---|---|---|---|
| १. अपि जापानः स्यात् अस्माकम् आदर्शः | सं. रत्नाकर प्रा. | ५ | ९, १० |
| २. जर्मन-शिक्षा-नीतिः | सं. रत्नाकर प्रा. | ६ | १, २ |
| ३. सीता | सं. रत्नाकर प्रा. | ६ | ९, १० |
| ४. फ्रांस-देश-वासिनां दृष्टौ भारतम् | सं. रत्नाकर प्रा. | ७ | २ |
| ५. गाथासप्तशती अमरुकश्च | सं. रत्नाकर | १ | ४ |

| | | | | |
|---|---|---|---|---|
| ६. | प्राकृत-भाषा कै: कै: कारणै: संस्कृततो मधुरा? | सं. रत्नाकर | १ | ५ |
| ७. | गाथा-सप्तशती बिहारी-सतसई च | सं. रत्नाकर | १ | ६ |
| ८. | प्राप्त-पत्रस्य प्रत्युत्तरम् | सं. रत्नाकर | २ | ९ |
| ९. | समादधतु सज्जना: | सं. रत्नाकर | ११ | ४, ६ |
| १०. | संस्कृतानुरागिण: शृण्वन्तु | सं. रत्नाकर | ११ | ५ |
| ११. | अपि सत्येयं कोकिलानां परपुष्टता? | सं. रत्नाकर | ९ | ४ |
| १२. | अपि नासाभूषणमिदमासां यवन-जातीनां सहवासादनुकृतम्? | सं. रत्नाकर | ९ | ६,७,८,९ |
| १३. | सांख्य-शास्त्रस्य चिर-विस्मृतो ग्रन्थकार: | सं. रत्नाकर | १२ | ३ |
| १४. | रेऊ महोदयस्य आर्य-विधानम् | सं. रत्नाकर | १२ | १०,११,१२ |
| १५. | आगरानगरस्यैतिहासिकता | सं. रत्नाकर | १२ | १०,११,१२ |
| १६. | भारतीयं भोजन-शास्त्रं शष्कुली (जलेबी) च | सं. रत्नाकर | १२ | १०,११,१२ |
| १७. | पी. के. गोडे महोदयस्य गवेषणा-कार्यम् | सं. रत्नाकर | १०, | ११ |
| १८. | अनुपलब्धं संगीतसूत्रम् | सं. रत्नाकर | ११ | ८ |
| १९. | गन्धर्वसेनस्य स्वर्गयात्रा | सं. रत्नाकर | १२, | ९ |
| २०. | प्राचीना ऋषयश्चौद्भिदतत्त्वं च | अमरभारती | २ | १,४ |
| २१. | अद्भुतचिकित्सा | अमरभारती | १ | १०, ११ |
| २२. | मुद्राराक्षसस्य चाणक्य: | अमरभारती | १ | १, २ |
| २३. | अमरकोषे टीकाकाराणां कृपा | अमरभारती | १ | ६ |
| २४. | सांप्रतिकशिक्षाया धनभिक्षा | अमरभारती | १ | ७ |

| | | | |
|---|---|---|---|
| २५. नवीन-शिक्षितानां दृष्टौ प्राचीनमस्मत्साहित्यम् | अमरभारती | २ | ७ |
| २६. अपि नाम सेयमव्यावहारिकी? | सारस्वती सुषमा | ७ | २ |
| २७. संस्कृतभाषायाः महत्त्वम् | सूर्योदयः, | ८ | १ |

**ललित-निबन्धाः-**

| | | | |
|---|---|---|---|
| १. श्रद्धायाः पराकाष्ठा | सं. रत्नाकर प्रा. | ५ | ११,१२ |
| २. वासन्तिकः प्रमोदः | सं. रत्नाकर प्रा. | ९ | ८,९ |
| ३. किन्तोः कुटिलता | सं. रत्नाकर | १ | ७,८,९,१० |
| ४. संस्कृतज्ञानां महाशयता | सं. रत्नाकर | १९ | १०,११ |
| ५. अङ्ककौतुकम् | सं. रत्नाकर प्रा. | ६ | १, २ |
| ६. कवि-कौतूहलम् | सं. रत्नाकर प्रा. | ६ | ३, ४ |
| ७. अपि अस्वार्थिनो ब्राह्मणाः शूद्रेषु? | सं. रत्नाकर प्रा. | ६ | ७,८ |
| ८. संस्कृतस्य नवीनं संस्कृतम् | सं. रत्नाकर प्रा. | ३ | ११ |
| ९. संस्कृतभाषा च तत्कोषश्च | सं. रत्नाकर प्रा. | ९ | ५ |
| १०. विद्वद्भ्यो निवेदनम् | सं. रत्नाकर प्रा. | ९ | ६ |
| ११. महर्घतापिशाची | सं. रत्नाकर प्रा. | ९ | ६ |
| १२. कुतो वा न प्रसरेतां चरणौ? | सं. रत्नाकर प्रा. | १० | ३ |
| १३. दन्तकथा | सं. रत्नाकर प्रा. | १० | ९ |
| १४. जरीयान् ज्यौतिषी | सं. रत्नाकर प्रा. | ११ | १२ |

## मार्गदर्शको निबन्धः

# सर्जनकौशले शब्दगुम्फनविधावैविध्यम्

छन्दोनिबन्धकानां कवीनां रचनाशैली निबन्धनीयविषयानुसारं नाना-विधान्मार्गानादायाऽग्रेसरी भवति। कुत्रचित् स्वल्पमप्यर्थं विपुलं विस्तृतं स वर्णयति, क्वचित्तु भूयांसमप्यर्थं प्रतिभाचातुर्येण भृशतरं लघूकृत्य समुपस्थापयति। एतावध्ल्लाघ्यवमाश्रयति यद् विस्तृतवाक्येन बोधनीयमर्थं केवलमेकमात्रेण पदेनोपनिबध्नाति। पुरातनैः कविभिर्निजरचनासु बहुतरं भूयः परिशीलितोऽयं प्रकारः (वामनादिभिर्विस्तारप्रकारोऽयं 'व्यास' नाम्ना, संक्षेपप्रकाश्च 'समास' नाम्ना सूचितः।) प्राञ्चः कवयः प्रकारैरेभिर्भूयांसं लाभं प्रापुः किन्तु मध्ययुगस्य साहित्यशास्त्रात् (अलंकारशास्त्रात्, रीतिग्रन्थेभ्यः) एवंविधा विषयास्तिरोहिता बभूवुः। तत्स्थानम् अन्यान्यशास्त्रैः सह विवादमया विषया अवरुरुधुः।

उपरिसूचितसाहित्यरचनार्थमुपयुक्ता भाषा अपेक्ष्यते। भाषायाः संपत्तिस्तु (अर्थात् तादृशसंपत्त्यर्थं साधकानि) यथेष्टमर्थदातारः शब्दा धातवश्चेति को वा न जानाति? संस्कृतभाषाया नामानि (प्रातिपदिकानि) धातवश्च तथा कामधेनवो यथा एभिर्निबद्धा रचना अद्भुतं प्रभावमुत्पादयामास सहृदयानां हृदये। अपेक्ष्यते तु तत्र साहित्यनिबन्धकस्य कवेः प्रतिभाचातुर्यं नूनम्। 'कल' कामधेनुरिति प्रसिद्धो वैयाकरण-वर्गे। अर्थात् 'कलयति' इति क्रियां करण-रचन-स्थापन-विचारणादि-नानार्थेषु प्रयुयुजुः प्राञ्चः कवयः। एवं किल यथेच्छ-विस्ताराय सुखं स्वातन्त्र्यं लब्ध्वाऽपि यथामनोरथमर्थसंपत्तये पुनरग्रे प्रासरन् प्राचीनाः प्रतिभासंपन्नाः। ते हि एकस्य धातोः प्रयोजनमन्येनाऽपि धातुना यथेष्टं संपादयामासुः। एतदर्थमेव दार्शनिकगोष्ठ्यां-प्रपञ्चिता लक्षणा-व्यञ्जनादीनां मार्गाः साहित्यसीमायामपि प्रविविशुः, यैर्हि नानाविधविचित्रार्थसंपत्तिः कविभिरधिगता। एतस्या अर्थसंपत्तेरधिगमाय साहित्य-

रीतिग्रन्थेषु लक्षणा-व्यञ्जनादीनां भूयांसो भेदाः प्रकाराश्च प्रचलिता यैस्तावद-लंकारग्रन्थानां भूयान् भागोऽवरुद्धः। किन्तु तेषामुपयोगं यथावदजानतां सां-प्रतिक-साहित्याध्यायिनां कृते रीतिग्रन्थानां सोयं भागः केवलं घोषणाय कण्ठशोषणायैव।

विवादमात्राय फक्किकाग्रन्थान् संचिन्वन्तो नवीन-वैयाकरणा अपि मार्गमिमं विस्मृतवन्तः। किन्तु यथार्थतो व्युत्पन्नैः प्राचीन-वैयाकरणैर्निजनिबन्धेषु पद्धतेरेतस्या दिग्दर्शनं यथावद् विहितम्। समर्थैः कविभिश्च सोयं मार्गः संस्कृतभाषाया व्यवहार-प्रवाहे प्रचारितश्च पूर्वम्। वर्णिका ('बानगी') प्रदर्शनार्थमेवंविधा धातवः केचिदधो निर्दिश्यन्ते। नानाविधानां छन्दसां गतेरनुसारं नानाभङ्गीनि वाक्यानि विरचयितुं विवशा; अत एव हि रचनासमये स्वोपयुक्तान् शब्दान् धातूंश्च गवेषयन्तो रचनानिबन्धकाः कवय एतेषामुपयोगमवसरे परिज्ञास्यन्ति। प्रयोक्तृणां सौकर्याय नानावाक्यानि स्वयं विरचय्य धातूनाममीषां प्रयोगप्रक्रियां स्वयमहं सूचयामि। दिग्दर्शनेनाऽनेन व्युत्पन्नाः कल्पयेरन्न-न्यान्येषामपि धातूनां प्रयोगम्।

**"पश्यति"** इत्यभिव्यञ्जयितुं

**1. नेत्रपर्यायैः शब्दैः सह अतिथि-गोचर-प्राघुणिक-विषय-प्रभृतीन् उपयुक्त-शब्दान् संयोज्य ते यदि 'कर्म' कारकाणि निर्मीयन्ते तर्हि करणार्था अपि धातवो दर्शनार्थकानां धातूनां कार्यं कुर्वन्ति।**

**2. नेत्रपर्यायाः शब्दाः 'करण' कारकाणि भूत्वा पानार्थकैर्धातुभिः संबध्यन्ते तर्हि पानार्थका अपि धातवो दर्शनार्थकानां धातूनां कार्यं कुर्वन्ति।**

यथा—नेत्रयोरतिथिं करोति। लोचनगोचरं विदधाति। लम्भयति लोचना-तिथिताम्। प्रापयति प्रेक्षणप्राघुणिकताम्। उपनयति नयन-विषयताम्। नयति नयनयोरतिथिताम्। निर्माति नेत्रविषयम्। नयति नयनसीमनि। विदधाति नयनयोरतिथिम्। आतनुते प्राघुणकं नेत्रयोः। लोचनयोर्गोचरमुपानयति। विदधाति विलोचनविषयम्। उपनयति नयनपथम्। प्रापयति प्रेक्षण-पथम्। चक्षुषोः प्राघुणकमातनुते। गमयति गोचरं चक्षुषोः। नेत्रातिथिमुपकल्पयति। नयनयोरवता-रयति। दृशोरुपनयति। दृशोरानयति गोचरम्। निर्माति नेत्रयोरतिथिम्। आनयति

नयनयोर्गोचरम्। रचयति लोचनयोरतिथिम्। दयया दृशोरुपहरति। दृष्टिमुपनयति। वितनोति नेत्रयोरतिथिम्। दृशोर्गोचरमुपगमयति। नेत्रातिथिमारचयति। लम्भयति लोचनान्तिकम्। आनयति नयनयोरभिमुखम्। दृशोर्गोचरीकरोति। दयया तनुते। विरचयति नेत्रयोरतिथिम्। विदधाति वीक्षणविषयम्। आचरति गोचरं चक्षुषोः। निर्माति नयनयोर्विषयम्। गमयति गोचरमक्ष्णोः। अवतारयति दृशोः। उपहरति चक्षुषोः। नयति नयन-विषयम्। अधिनयति नयनाङ्गणम्। अतिथिमातनोति नयनयोः। प्राघुणकमारचयति चक्षुषोः। आपातयत्यन्तिकं चक्षुषोः। वीक्षणाङ्गणमुपस्थापयति। संगमयति नयनाभ्याम्। उररीकरोति चक्षुर्भ्याम्। अधिगमयति प्रेक्षणपुटपरिसरम्। लम्भयति नेत्रप्राधुणिकताम्। प्रापयति लोचनविषयताम्। ढौकयति नेत्रयोः। प्रणयति प्राधुणिकं प्रेक्षणयोः।

दृग्भ्यामापिबति। लेढि लोचनाभ्याम्। रसयति नयनाभ्याम्। आचामति लोचनचषकेण। रसयति दृग्भ्याम्। आरसयति नयनपुटकेन। आचामति लोचनाभ्याम्। प्रेमतः प्रपिबति प्रेक्षणपुटकेन।

**3. उपरिसूचितप्रकारेण नेत्रपर्यायाणां शब्दानां स्थाने श्रोत्रपर्यायाः शब्दा यदि निवेश्यन्ते तर्हि करणार्थाः, तथा अन्यान्ये च धातवः श्रवणार्थकधातोः कार्यं साधयन्ति।** एवं श्रोत्रपर्यायाणां करणत्वे पानार्थका अपि श्रवणार्थका भवन्ति। श्रोत्रयोरतिथीकरोति। कर्णगोचरमुपकल्पयति। आनयति श्रवसोरन्ति- कम्। करोति कर्णातिथिम्। अन्तिकमानयति श्रवसोः। श्रवणपथातिथीकरोति। श्रवसोरवतारयति। कलयति कर्णयोरुपकण्ठम्। श्रवणसमीपमुपनयति। प्रणयति प्राघुणिकं श्रवसोः। आपिबति कर्णपुटकेन। श्रुतिमुपनयति। श्रवसोर्गोचरी- करोति। प्रापयति श्रवणप्राधुणिकताम्। विदधाति श्रवणविषयम्। श्रवणातिथिमनुतिष्ठति। गमयति गोचरं श्रवसोः। आचमति श्रवणचषकेण। तनोत्यतिथिं श्रवसोः। विरचयति विषयं श्रवसोः। प्रापयति श्रवणपथम्। अवतारयति श्रवसोः। ढौकयति कर्णयोः। अभिमुखमानयति श्रवसोः। कलयति कर्णगोचरम्। श्रुत्यामत्यादरेण संनयति। प्रापयति कर्णाभ्याशम्। विदधाति विषयं श्रवणयोः। प्रापयति श्रवणपरिसरम्। श्रवसोः संनयति गोचरम्। उपनयति श्रवणाङ्गणम्। रसयति श्रवणपुटकेन। कलयति श्रोत्रयोरतिथिम्।

## जल्पति

**4. उपरिनिर्दिष्टप्रकारेण नेत्रपर्यायाणां शब्दानां स्थाने वाक्पर्यायाः शब्दा यदि निवेश्यन्ते तर्हि ग्रहणार्था अपि क्रिया ( धातवः ) जल्पनार्थानां क्रियाणां प्रयोजनं साधयन्ति। 5. प्राक्तनैः कविभिः क्षुण्णे संस्कृतवाण्या व्यवहारमार्गे आदान-गमन-आगमन-सेवन-प्राप्ति-धारण-प्रकाशनार्थका;, तथा चुम्बन-आलिङ्गनाद्यर्थकाश्च धातवो युक्त्या प्रयुज्यमाना ग्रहणार्थकधातुवद् व्यवह्रियन्ते।** [एतेषां प्रयोगस्योदाहरणान्यधस्ताद्विलोक्येरन्] गिरमादत्ते। वाक्यं विन्दति। गृह्णाति गिरम्। वचः प्रतिपद्यते। वाणीमुपादत्ते। भारतीं प्रकाशयति। गिरमूरीकरोति। विसृजति वाणीम्। वाचमुत्सृजति। वितरति वाणीम्। विसृजति सरस्वतीम्। भारतीमुपादत्ते। वचनमूरीकरोति। वाग्भङ्गीमङ्गीकरोति। वाचमादत्ते। वाचं प्रतिपद्यते। विन्दति सरस्वतीम्। वचनमुरीकरोति। विश्राणयति वाणीम्। प्रकटीकरोति वाचम्। प्रकट्यति वाणीम्। प्रकटीकरोति। गिरमुररीकुरुते। रचयति वचनानि। गिरं परिगृह्णाति। वितनोति भारतीम्।

## हृष्यति

**6. उपरिनिर्दिष्टप्रकारेण हर्षवाचकाः शब्दाः आदान- गमन-आगमनाद्यर्थकानां धातूनां चेत् कर्मतां प्रतिपद्यन्ते तर्हि प्रमोदनार्थकानां धातूनामर्थः स्पष्टं प्रतीयते।** मुदमधिरोहति। मुदमालिङ्गति। मुदमाचुम्बति। मुदमुपयाति। प्रमोदमधिगच्छति। बिभर्ति परितोषम्। परिशीलयति परितोषम्। संमदमालिङ्गति। आमोदमधिगच्छति। प्रमदमुपयाति। प्रमोदमुपारोहति। संमदमुपैति। याति परितोषम्। संमदमधिगच्छति। हर्षमुपयाति। प्रमोदमुपैति। चुम्बति निर्वृतिम्। हर्षमधिश्रयति। मुदमूरीकरोति। प्रमदमालम्बते। प्रीतिमादत्ते। विन्दति संतोषम्। मुदमासेवते। मुदमधिविन्दति। भजति मुदम्। धरति परितोषम्। बिभर्ति संमोदम्। परिचुम्बति परितोषम्। मोदमायाति। प्रीतिमधिगच्छति। प्रयाति परितोषम्। हर्षमश्नुते। आनन्दमधियाति। वहति हर्षम्। संमदमाविन्दति। प्रीतिमुररीकरोति। संमदमासादयति। प्रमोदमालिङ्गति। प्रीतिमुपवहति। प्रमदमधिगच्छति। मुदमवाप्नोति। दधात्यानन्दम्। प्रयाति प्रमदम्। मुदं दधाति। आनन्दमासादयति। दधाति संमदम्। प्रीतिमुपैति। आमोदमधिवहति। वहति प्रमदम्। हर्षमभिचुम्बति। मोदमुपवहति। अधिविन्दति संमोदम्। मुदमयते।

**7. मुदित-हृष्ट-प्रभृतयः शब्दा यदि कर्तुर्विशेषणानि भवन्ति संवृत्त्यर्था अपि क्रिया मोदनार्थक-क्रियाणां प्रयोजनं संपादयन्ति। यथा–**

भवति प्रसन्नः। संपद्यते संतुष्टः। जायते प्रीतः। जायते प्रमुदितः संपद्यते प्रसन्नः। निष्पद्यते प्रमुदितः। भवति मुदितः। भवत्यानन्दितः। संजायते मुदितः। प्रभवति संतुष्टः। प्रभवति प्रीतः। संपद्यते प्रमदभाक्। जायते परितुष्टः।

## बिभेति

**8. उपरिसूचितप्रकारेण भयवाचकाः शब्दा आदान-गमन-आगम-नाद्यर्थकानां धातूनां चेत्कर्मतां लभन्ते तर्हि भयार्थकानां धातूनामर्थं प्रत्याययन्ति।** भयमधिगच्छति। भयमधिरोहति। भयमालिङ्गति। भयमाचुम्बति। भयमुपयाति। त्रासमुपैति। बिभर्ति भयम्। त्रासमासादयति। भीतिमश्नुते। भयमुपैति। चुम्बति संत्रासम्। साध्वसमासादयति। भीतिमुपैति। उपयाति साध्वसम्। परिचुम्बति साध्वसम्। भीतिमाचुम्बति। भीतिमधिगच्छति। साध्वसमालम्बते। साध्वसमाप्नोति। भीतिमासादयति। त्रासमुपयाति। भीतिमूरीकरोति। दधाति भीतिम्। संत्रासमालिङ्गति। भीतिमासेवते। भयमवाप्नोति। धरति दरम्। बिभर्ति भियम्। भियमभियाति। विन्दति संत्रासम्। भजति भियम्। भियमश्नुते। दधाति संत्रासम्। भियमालम्बते। भजति संत्रासम्। अधिगच्छति भीतिम्। भियमभिचुम्बति। त्रासमभिपद्यते। दरमाबिभर्ति। वहति भीतिम्। उपयाति भियम्। बिभर्ति भीतिम्। साध्वसमभिचुम्बति। भयमभिपद्यते। भयमयति। भयमनुभवति। अधिरोहति संत्रासम्। प्रतिपद्यते भीतिम्।

**9. एवमेव भीतादयः शब्दा यदि कर्तुर्विशेषणानि भवन्ति तर्हि संपत्त्यर्था अपि क्रिया भयार्थकानां धातूनामर्थं प्रत्याययन्ति–**

भवति भीतः। संपद्यते संत्रस्तः। भीतः संपद्यते। जायते त्रस्तः। भवति भयभाक्। भवति भीरुः। भवति भयभुग्नः। त्रस्तो भवति। संपद्यते भीतिभाक्। भीलुको भवति। संजायते भीरुकः।

### जिह्रेति

**10. पूर्वोक्त प्रकारेण ह्री-लज्जादयः शब्दा यदि आदान-गमन-आगमनाद्यर्थकानां धातूनां कर्मकारकतां प्रतिपद्यन्ते तर्हि लज्जार्थकानां धातूनामर्थं साधयन्ति।** लज्जामुपयाति। ह्रियमधिगच्छति। आलिङ्गति लज्जाम्। ह्रियमाचुम्बति। ह्रियमुपयाति। व्रीडामुपैति। बिभर्ति लज्जाम्। ह्रियमुररीकरोति। लज्जामासादयति। दधाति व्रीडाम्। चुम्बति मन्दाक्षम्। ह्रियमाप्नोति। अधिरोहति व्रीडाम्। उपयात्ययत्रपाम्। वहति लज्जाम्। दधाति ह्रीणताम्। धत्ते व्रीडाम्। मन्दाक्षमासादयति। व्रीडामभिपद्यते। भजति लज्जाम्। उपैति ह्रियम्। अश्नुते लज्जाम्। त्रपामुपागच्छति। ह्रियमायाति। व्रीडामूरीकरोति। ह्रियमाबिभर्ति। अश्नुते ह्रियम्। व्रीडामालम्बते। ह्रियमेति। त्रपां बिभर्ति। ह्रियमयते। ह्रियमासादयति। प्राप्नोति त्रपाम्। धत्ते ह्रीणताम्। अयते व्रीडाम्। अभिपद्यते लज्जाम्। प्रपद्यते व्रीडाम्। प्रयाति लज्जाम्। आलम्बते लज्जाम्। व्रजति व्रीडाम्। लज्जामयते। विन्दति व्रीडाम्। ह्रियमभिपद्यते। त्रपामुपारोहति। ह्रियमादत्ते। प्रतिपद्यतेऽपत्रपाम्। प्रयाति व्रीडाम्। धरति त्रपाम्। श्रयति लज्जाम्। भजति व्रीडाम्। लभते लज्जाम्। धत्ते त्रपाम्। उपैत्यपत्रपाम्।

**11. एवमेव ह्रीण-लज्जितादयः शब्दा यदि कर्तुर्विशेषणानि भवन्ति तर्हि सत्तार्थका अपि धातवो लज्जार्थकानां धातूनां कार्यं संपादयन्ति। यथा–**

जायते लज्जितः। भवति व्रीडितः। संपद्यते ह्रीणः। भवति लज्जालुः। निष्पद्यते व्रीडितः। संजायते व्रीडाभाक्। भवति लज्जितः। जायते त्रपावनतः। लज्जितः संपद्यते।

### विस्मयते

**12. उपरिनिर्दिष्टप्रकारेण विस्मयार्थकाः शब्दा यदि-आदान-गमन-आगमनाद्यर्थकानां धातूनां कर्मतां लभन्ते तर्हि विस्मयावबोधकानां धातूनामर्थः प्रतिपन्नो भवति।** विस्मयमायाति। आश्चर्यमुपैति। लभते विस्मयम्। प्रयात्याश्चर्यम्। विस्मयमुपैति। बिभर्ति विस्मयम्। आश्चर्यमधिगच्छति। विस्मयमवाप्नोति। चुम्बति विस्मयम्। आश्चर्यमश्नुते। विस्मयमूरीकरोति। चित्रमुपैति। दधाति विस्मयम्। विस्मयमालम्बते। आश्चर्यमा-

सादयति। अयते चित्रम्। विस्मयमुपारोहति। चित्रमाबिभर्ति। भजति विस्मयम्। विस्मयामासादयति। अधिरोहति चित्रम्। विस्मयमश्नुते। दधाति चित्रम्। विन्दति विस्मयम्। भजत्याश्चर्यम्। उपयात्यद्भुतम्। चित्रं बिभर्ति। अधिगच्छति विस्मयम्। आश्चर्यमालिङ्गति। शीलति विस्मयम्। प्रपद्यते चित्रम्। धरत्याश्चर्यम्। एति विस्मयम्। **एवमेव कर्तुर्विशेषणीभूतैर्विस्मितादिशब्दैः** जायते विस्मितः। भवत्याश्चर्यितः। संपद्यते विस्मयभाक्। भवति विस्मयभाक्। विस्मितो निष्पद्यते। संपद्यते चित्रितः। आश्चर्यभाग् भवति। संजायते विस्मययुक्।

## व्यथते

**13. पूर्वोक्तप्रकारेण व्यथा-पीडादयः शब्दा आदान-प्रदानगमन-आगमनाद्यर्थकानां धातूनां चेत्कर्मतां प्रतिपद्यन्ते तर्हि व्यथार्थकानां धातूनां प्रयोजनं संपादयन्ति।**

व्यथामुपैति। पीडामुपयाति। दुःखमधिगच्छति। आलिङ्गति बाधाम्। वेदनामुपयाति। दुःखमधिरोहति। व्यथामवाप्नोति। दुःखमश्नुते। दधाति बाधाम्। व्यथामायाति। अधिगच्छति वेदनाम्। कृच्छ्रमधिगच्छति। अभिपद्यते कष्टम्। पीडामयते। अभियाति दुःखम्। उपैति कृच्छ्रम्। अश्नुते कष्टम्। भजति बाधाम्। धत्ते पीडाम्। क्लेशमालम्बते। दुःखमभिपद्यते। व्यथामुपारोहति, कष्टमेति। पीडामालम्बते। विन्दति वेदनाम्। व्रजति व्यथाम्। वहति व्यथाम्। क्लेशमासादयति। प्रपद्यते व्यथाम्। बाधामभिचुम्बति। क्लेशं लभते। कष्टमाप्नोति। प्रयाति पीडाम्। बिभर्ति बाधाम्। क्लेशमयते। लभते व्यथाम्। कष्टमुपयाति। धरति बाधाम्। श्रयति व्यथाम्। प्रपद्यते पीडाम्। क्लेशमश्नुते, धत्ते व्यथाम्। दुःखमेति। पीडामुपैति। कष्टं विन्दति। व्यथां लभते। क्लेशमभिपद्यते। व्यथामासादयति। बिभर्ति संक्लेशम्। कृच्छ्रमुपयाति। **एवमेव व्यथितादिशब्देषु कर्तुर्विशेषणीभूतेषु संपत्त्यर्थकैर्धातुभिः–** संपद्यते दुःखी। जायते क्लिष्टः। भवति दुःखितः। संपद्यते क्लेशभाक्। पीडितो भवति। संजायते क्लेशभुक्। भवति व्यथितः। जायते बाधायुक्। निष्पद्यते पीडितः।

**14. हर्षवाचकाः शब्दा यदि दान-उत्पादनार्थकानां धातूनां कर्मकारकतां भजन्ते तर्हि ते धातवः प्रीणनार्थकानां घातूनामर्थं बोधयन्ति।**

मुदमुत्पादयति। हर्षं जनयति। प्रमदं विदधाति। मोदमादधाति। प्रसौति प्रमदम्। आमोदमुद्गमयति। प्रमदं प्रवर्तयति। प्रीतिमाविर्भावयति। निर्माति संमदम्। आनन्दमुद्भावयति। प्रसौति संमदम्। प्रकटयति प्रमदम्। प्रोद्भावयति प्रीतिम्। सूते सुखम्। शर्म निर्माति।

प्रमदं ददाति। सुखं दिशति। प्रमोदमर्पयति। आनन्दं वितरति। अर्पयति प्रीतिम्। श्रुदं ददते। दिशति हर्षम्। प्रयच्छति प्रीतिम्। दधाति मोदम्। वितरति संमदम्। आनन्दमर्पयति। संमदं प्रयच्छति। ददाति भोदम्। प्रमदमर्पयति। दिशत्यानन्दम्। यच्छति मुदम्। दिशति प्रीतिम्। वितरति सुखम्। हर्ष-यर्पयति। सुखं प्रयच्छति। वितरति प्रमदम्। ददात्यानन्दम्। धत्तेमुदम्। जनयति प्रीतिम्। संमदमर्पयाति।

## लज्जयति

**15. लज्जार्थवाचकाः शब्दा यदि कर्मकारकतामुपयन्ति तर्हि दान-उत्पादनार्थका अपि धातवो ह्रेपणार्थकानां धातूनामर्थं संपादयन्ति।**

लज्जां जनयति। ह्रियतुत्पादयति। प्रसौत्यपत्रपाम्। व्रीडाभाविर्मावयति। प्रकटयति त्रपाम्। आदधाति ब्रीडाम्। प्रोद्भावयति ह्रियम् जनयत्यपत्रपाम्। निर्माति मन्दाक्षम्। उत्पादयति त्रपाम्। ब्रीडामुद्गमयति। लज्जां प्रकटयति। प्रवर्तयति त्रपाम्। निर्माति ह्रीणताम्। सूते ह्रियम्। त्रपामुपारोयति। निष्पादयति ब्रीडाम्। दधाति लज्जाम् वितरति ब्रीडाम्। ह्रियमर्पयति। दिशति ब्रीडाम्। प्रयच्छत्यपत्रपाम्। ददाति लज्जाम्। त्रपामुपार्पयति। ह्रियं दिशति। वितरति लज्जाम्। ददतेऽपत्रपाम्। प्रदिशति ह्रियम्। यडामर्पयति। प्रयच्छति ह्रियम्। प्रददाति व्रीडाम्। उद्भावयति त्रपाम्। जनयति ह्रियम्।

## विस्मापयति

**16. एवमेव विस्मयवाचकाः शब्दा यदि क्रर्मतां भजन्ते तर्हि दान-उत्पादनार्थका अपि धातवो विस्मापनार्थानां धातूनामर्थं प्रत्याययन्ति।**

विस्मयमुत्पादयति। जनयत्याश्चार्यम्। प्रस्तौति विस्मयम्। आश्चर्यमु-पारोहयति। प्रकस्टयत्याश्चर्यम्। निर्माति विस्मयम्। संजनयति चित्रम्।

विस्मयमुद्गमयति। विस्मयमाविर्भावयति। सूते विस्मयम्। ददात्याश्चर्यम्। वितरति विस्मयम्। दिशत्याश्चर्यम्। प्रयच्छति विस्मयम्। विस्मयमर्पयति। प्रददाति चित्रताम्। प्रदिशति विस्मयम्। अद्भुतमुद्भावयति। वितनोति विस्मयम्। वितरति चित्रताम्। वर्तयति विस्मयम्। संददाति विस्मयम्। आश्चर्यमर्पयति। सृजति विस्मयम्। प्रयच्छति चित्रम्। आश्चर्यमुद्गमयति। सृजत्याश्चर्यम्। दधाति विस्मयम्। संजनयति चित्रम्। विश्राणयति विस्मयम्। प्रसौत्याश्चर्यम्।

## व्यथयति

**17. एवमेव वेदनावाचि शब्देषु कर्मतां गतेषु दानोत्पादनार्थका धातवः पीडनार्थकानां धातूनां प्रयोजनं साधयन्ति–**

संजनयति व्यथाम्। उत्पादयति पीडाम्। प्रसूते व्यथाम्। सृजति वेदनाम्। दधाति व्यथाम्। जनयति वेदनाम्। व्यथामुद्गमयति। निर्माति पीडाम्। वितनोति वेदनाम्। प्रवर्तयति पीडाम्। दुःखमुद्भावयति। व्यथामाविर्भावयति। सौति दुःखम् उत्पादयति वेदनाम्। क्लेशमाविर्भावयति। संजनयति बाधाम्। प्रसौति संक्लेशम् बाधामुत्पादयति। उद्भावयति क्लेशम्। निर्माति वेदनाम्। सृजति व्यथाम्। प्रणयति पीडाम्। प्रवर्तयति दुःखम्। व्यथामादधाति। प्रकरोति संक्लेशम्। ददाति दुःखम्। दिशति क्लेशम्। प्रयच्छति कृच्छ्रम्। सृजति कष्टम्। जनयति दुःखम्। वितरति वेदनाम्। प्रयच्छति पीडाम्। प्रसूते यातनाम्। विश्राणयति वेदनाम्। धत्ते कष्टम्। दधति वेदनाम्। कृच्छ्रमर्पयति। उत्सृजति यातनाम्। वितरति कृष्टम्। दधाति यातनाम्। प्रसौति पीडाम्। वितरति व्यथाम्। प्रददाति पीडाम् जनयति कृच्छ्रम्। दिशति दुःखम्। कष्टमुद्भावयति।

## तुलयति

**18. औपम्य-उपमिति-तुला-तुलना-साम्य-उपमानादिशब्दसमूहे कर्मकारकतां गते सति पूर्वनिर्दिष्टैः आदान-गमन-आगमन-सेवा-प्राप्ति-धारणाद्यर्थकैरपि धातुभिः तुलनार्थकानां धातूनामर्थः सम्यक्तया प्रतीयते–**

साम्यं दधाति। सादृश्यमासादयति। उपमामुपयाति। तुलनां विन्दति। सादृश्यमधिरोहति। साम्यमायाति। तुलनां लभते। प्रतिमां प्रपद्यते। तुलां गच्छति। उपमामुपैति। तुलां धत्ते। दधाति सादृश्यम्। भजति साम्यम्। धरति तुलाम्। समेति समताम्। व्रजति सादृश्यम्। गच्छति साम्यम्। दधात्युपमाम्। श्रयति साम्यम्। प्रपद्यते तुलनाम्। बिभर्ति तुलाम्। चुम्बति समताम्। दधात्यौपम्यम्। अधिगच्छति समानताम्। वहति सादृश्यम्। उपमामश्नुते। विन्दति तुलाम्। कलयति तुलनाम्। तुलामादत्ते। बिभर्ति सदृशताम्। तुलनामूरीकरोति। साम्यमवाप्नोति। तुलामालिङ्गति। उपमामभिपद्यते। तुलामालम्बते। उपमितिमुपारोहति। उपमामुपगच्छति। भजते तुलाम्। साम्यमेति। प्रयाति प्रातिनिध्यम्। दधाति सदृशताम्। भजति समभावम्। तुलामवाप्नोति। प्रतिपद्यते तुलनाम्। अयति तुलनाम्। यथा-वाणी सुधासाम्यं दधाति। वाक् सुधासादृश्यमासादयति। वाणी पीयूषोपमामुपयाति। सुभाषितं सुधया तुलनां विन्दति। सूक्तिः सुधासादृश्यमधिरोहति। सतामुपदेशः सुधासाम्यमायाति। **इत्यादिकमुदाहरणं कोविदैरञ्जसा संपादयितुं शक्यम्।**

### 19. कवयो मैत्री-सौहृदादिशब्दैरपि तमिममर्थं निबध्नीयुः-

सौहार्दं दधाति। मैत्रीं कलयति। सौहृदं संपादयति। स्नेहमासादयति। सौहृदमाधत्ते। स्नेहमधिरोहति। प्रीतिमुपयाति। प्रणयं प्रतियाति। सख्यमाबध्नाति। स्नेहं घटयति। मैत्रीं निर्माति। सख्यमुपकल्पयति। प्रीतिं प्रयाति। सौहृदमूरी-करोति। प्रतिपद्यते प्रणयम्। दधाति सख्यम्। सौहार्दमधिगच्छति। मैत्रीमुपारोहति। विन्दति वयस्यताम्। दधाति सौहृदम्। व्रजति सख्यम्। समधिगच्छति सब्रह्मचारिताम्। समेति सौहार्दम्। उपैति प्रणयम्। बिभर्ति मैत्रीम्। दधाति सतीर्थ्यताम्। वयस्यतां व्रजति। स्नेहमश्नुते। प्रेम प्रतिपद्यते। वहति वयस्यभावम्। शीलयति सौहार्दम्। भजति प्रणयम्। प्रणयमयति। कलयति सौहृदम्। प्रणयमुपयाति। मैत्रीमधियाति। प्रेम संपादयति। स्नेहमयते। मैत्रीमश्नुते। बिभर्ति सब्रह्मचारिताम्। संयाति सौहार्दम्। प्रीतिमुपैति। प्रणयमादत्ते। प्रणयमुपारोहति। धरति वयस्यभावम्। सख्यमधिगच्छति। संयाति सतीर्थ्यताम्। स्नेहमाबिभर्ति। मैत्रीमङ्गीकरोति। सौहार्दं कलयति। आचुम्बति सब्रह्मचारिताम्। सौहृदं धत्ते। प्रणयमाबध्नाति।

यथा–दधाति सुधया सौहार्दं वाणी। कलयति सुधया मैत्रीं भारती। सूक्तिः सुधायाः सौहार्दं संपादयति। वचनं पीयूषेण प्रणयं प्रतिपद्यते। भारती अमृतेन सख्यमाबध्नाति। भारती बिभर्ति सुधासब्रह्मचारिताम्। सूक्तिरमृतेन सौहृदमाकलयति। सतामुपदेशः सुधया स्नेहमाबध्नाति। सुभाषितानि समधिवहन्ति सुधायाः सतीर्थ्यताम्। कविसूक्तिः पीयूषेण प्रणयंप्रति पद्यते। सूक्तिरमृतेन विन्दति बन्धुभावम्। कविवचो मधुना मैत्रीमाघटयति। वनमालिनो वदनं वहति विधुना वयस्यभावम्।

**20. प्रतिमल्लादिपदैरपि सोऽयमर्थः समभिधीयते सहृदयैः–**

सुधया प्रतिमल्लतामाबध्नाति कविसुभाषितम्। प्रवहति पीयूषेण प्रतिद्वन्द्वितां सुभाषितमिदं साधूनाम्। दधाति शशलक्ष्मणः प्रतिपक्षतामिदमाननं ते। वदनमिदं प्रतिपद्यते पङ्केरुहस्य प्रतिपक्षताम्। परिचुम्बति पार्वणसुधाकरस्य प्रतिपन्थिता-माननः मानतनयनायाः। प्रार्थिनां कामपूरणे पारिजातप्रतिमल्लतां प्रयाति ते करः। प्रत्यर्थिपरिमर्दने पुरन्दरप्रतिभटतामुपैति भूपालोऽयम्। कांस्यपात्रे पारद-प्रतियोगितामुपयान्ति समराङ्गणे ते तुरङ्गमाः। भुवो भारधारणे भगवतः प्रतिबन्ध्नाति प्रतिद्वन्द्वितां बाहुदण्डोयम्।

**21. विभ्रम-विलासादिशब्दैरपि तुलनार्थमाबध्नन्ति कवयः–**

विभ्रमं बिभर्ति। श्रियमधिगच्छति। शोभामालिङ्गति। श्रियमाचुम्बति। कान्तिमुपयाति। लक्ष्मीमालिङ्गति। श्रियमयते। कान्तिमुपैति। विलासमालिङ्गति। लक्ष्मीमालम्बते। रुचिमूकरोति। लावण्यमालिङ्गति। सुषमामासादयति। द्युतिमधिरोहति। शोभामभियाति। लावण्यमश्नुते। विलासमुपयाति। वहति विभ्रमम्। रुचिमभिपद्यते। शोभां लभते। विभ्रमं विन्दति। द्युतिमादत्ते। लावण्यं लभते। श्रियमभिपद्यते। बिभर्ति शोभाम्। विन्दति विलासम्। व्रजति विभ्रमम्। छविमभियाति। लभते लक्ष्मीम्। छविमभिपद्यते। लक्ष्मीमाकलयति। विभ्रममेति। श्रियमुपरोहति। आलिङ्गति शोभाम्। व्रजति विभ्रमम्। श्रियमेति। कान्तिमाविन्दति। विलासमश्नुते। द्युतिमाप्नोति। प्रपद्यते सुषमाम्। भजति शोभाम्। दधाति कान्तिम्। प्रयाति लक्ष्मीम्। श्रियमङ्गी-करोति। विलासमालम्बते। शीलयति शोभाम्। द्युतिं दधाति। विभ्रममङ्गीकुरुते।

श्रियमश्नुते। भजति विलासम्। रुचिमालिङ्गति। बिभर्ति श्रियम्। द्युतिं धरति। रुचिमयते। श्रियमधिरोहति। द्युतिमयते। लक्ष्मीमेति। विलासमभिपद्यते। सुषमामापूरयति। विच्छित्तिमभ्येति। कान्तिमाश्रयति।

यथा–कीर्तिर्विधुविभ्रमं बिभर्ति। यशश्चन्द्रश्रियमधिगच्छति। कीर्तिः शशिशोभामालिङ्गति। कीर्तिश्चन्द्रश्रियमाचुम्बति। कविकीर्तिः कलानिधिकान्ति-मुपयाति। यशस्ते शशाङ्कलक्ष्मीमालिङ्गति। कीर्ती राकापतिकान्तिमुपैति। यशश्चन्द्रलक्ष्मीमालम्बते।

**22. गुण-सौभाग्य-महिमादिशब्दसाहाय्येनापि तुलनार्थमभिव्यञ्ज-यन्तः कवयो दृश्यन्ते।**

यथा–सौभाग्यमभियाति। गुणमनुगच्छति। महिमानमुपारोहति। सौभाग्यं बिभर्ति। माहात्म्यमुपयाति। पदवीमुपैति। गुणं शीलयति। भजति सौभाग्यम्। दधाति माहात्म्यम्। गुणमालम्बते। सौभाग्यमाश्रयति। वहति महिमानम्। गुणमलिङ्गति। पदमाधत्ते। सौभाग्यं लभते। व्रजति महिमानम्। शीलयति सौभाग्यम्। महिमानमभिपद्यते। माहात्म्यमधिविन्दति। गुणमाकलयति। महिमानमश्नुते। माहात्म्यमाप्नोति। गुणमाचुम्बति। लीलामालिङ्गति। गुणमयते। पदमालम्बते। गुणमधिरोहति। माहात्म्यमङ्गीकरोति। सौभाग्यमभिपद्यते। गुणं लभते। महिमानमालम्बते। गुणं गृह्णाति। सौभाग्यमेति। महिमानमासादयति। सौभाग्यमभिभजते। गुणान् धरति। माहात्म्यमनुरुन्धे। शीलयति लीलाम्। महिमानमनुगच्छति। वैभवमभ्येति।

यथा–सूक्तिः सुधासौभाग्यमभियाति। वाणी पीयूषगुणमनुयाति। सुभाषित-ममृतमहिमानमुपारोहति। सतामुपदेशः सुधासौभगं बिभर्ति। अवसरे सुभाषितममृतमाहात्म्यमुपयाति। कविसूक्तिः सुधापदवीमुपैति। सुदृढमभ्यस्ता विमला कला रत्नरामणीयकमनुशीलयति। साधुवाणी सुधागुणं वहति। नीतिभाषितं भजति रसायनसौभाग्यम्। कविसूक्तिर्दधाति सुधासारस्यम्। साधुसंगतिः कलयति पारिजातमहिमानम्।

## निर्जयति

**23. न केवलं तुलनार्थमेव, निर्जयार्थमपि छेदन-विध्वंस-स्तेय-अपनया-र्थकैर्धातुभिरभिव्यञ्जयन्ति कवयः। अर्थगुम्फनलालित्याय अत्रापि विभ्रमविलासादिशब्दाः कर्मकारकताम्, निर्जेतव्यः प्रतिद्वन्द्वी च संबन्धितां धारयति। यथा–**

विभ्रममपनयति। विलासमुज्जासयति। शोभामवमृद्नाति। श्रियमाचूर्णयति। कान्तिमाहन्ति। लक्ष्मीं लुम्पति। शोभां शकलयति। सुषमां समापयति। छविमाच्छिनत्ति। द्युतिमवदारयति। रुचिमवचूर्णयति। विभ्रमं भिनत्ति। लावण्यं लुनाति। कान्ति कृणत्ति। द्युतिं दमयति। लक्ष्मीं लुनाति। रुचिमाचामति। कृन्तति कान्तिम्। श्रियं मुष्णाति। लावण्यं लुण्ठति। द्युतिं दलयति। क्षुनत्ति लक्ष्मीम्। कान्तिमपनयति। निर्दलयति श्रियम्। विलासमुन्मूलयति। मथ्नाति लक्ष्मीम्। विध्वंसते विलासम्। रुचिं चोरयति। द्रुह्यति द्युतिम्। सुषमामवमृद्नाति। अपहरति कान्तिम्। मुकुलयति लक्ष्मीम्। प्लोषयति लावण्यम्। विलासमुद्वासयति। मर्दयति विभ्रमम्। शमयति शोभाम्। निर्मूलयति लावण्यम्। हिनस्ति मनोरमताम्। शृणाति शोभाम्। विहन्ति विलासम्। रुचिमपनयति। संहरति कान्तिम्। विभ्रममवचूर्णयति। खण्डयति लावण्यम्। विध्वंसते कान्तिम्। निवर्तयति शोभाम्। विलासमुन्मर्दयति। धुनोति कान्तिम्। दलयति लक्ष्मीम्। अपनयति लावण्यम्। मुष्णाति रुचिम्। विहन्ति विभ्रमम्। अपकर्षति शोभाम्। विदारयति द्युतिम्। विडम्बयति सुन्दरताम्। धिक्करोति रुचिम्। भिनन्ति शोभाम्।

यथा–सुधाविभ्रममपनयति ते वाणी। सुधाविलासमुज्जासयति ते सुभाषितम्। कविसूक्तिः सुधाश्रियमाचूर्णयति। चरणस्ते लुण्ठति लक्ष्मीं कमलानाम्। सतामुपदेशः शमयति शोभां सुधायाः। हस्तस्ते शकलयति शोभां किसलयस्य। मुखं ते शमयति शोभां शशाङ्कस्य। साधुसुभाषितं सुधाविभ्रमं भिनत्ति। मुखलक्ष्मीस्ते कमलविलासमुन्मूलयति। मुखमाधुर्य ते शकलयति शशाङ्कशोभाम्।

**24. कर्मीभूतानां-गुण-सौभाग्य-महिमादिशब्दानां साहाय्येनापि तमिम- मर्थमाबध्नन्ति सत्कवयः** .......... सुधागुणानवमृद्नाति सुभाषितं कवीनाम्। सतां सूक्तिः समापयति सुषमां सुधायाः। समये समीरिता

सूक्तिः संहरति सौभाग्यं सुधायाः। सुरभारतीयममृतमहिमानमामर्दयति। धीरता ते जलधिमाहात्म्यमुद्वासयति। मुखं ते मुष्णाति महिमानं मृगाङ्कस्य। सुकविसूक्तिः संमथ्नाति गुणानमृतस्य। हस्तस्ते लङ्घयति लीलां कल्पतरोः। वाणी ते पिनष्टि पीयूषगुणान्। सुभाषितं ते शमयति सौभाग्यममृतस्य। मुखं ते शकलयति सौभगं शशाङ्कस्य। पाणिस्ते व्यपोहति लीलां पल्लवस्य। दमयति महिमानम्बुराशेस्तवाऽगाधगाम्भीर्यम्। मुद्रयति महिमानमम्बुनिधेस्ते गुरु गाम्भीर्यम्। लुण्ठति लीलां नीलाम्बुजयोस्ते नयनयुगलम्। तिरोदधाति सुधामाहात्म्यमिदं साधुजनसुभाषितम्। व्यपनयति वदान्यस्ते बाहुवैभवं देवतरोः।

**24. कर्मीभूतैः कीर्तिवाचकैर्दर्पपर्यायैश्चापि शब्दैस्तमेनमर्थमभिव्य-ञ्जयन्ति कविता-कोविदाः—**

दर्पमपहन्ति। गर्वं खर्वयति। अभिमानमपनयति। अहंकारमुन्मूलयति। मानमवमर्दयति। मदमुपमृद्नाति। गर्वमुच्छिनत्ति। दर्पं ध्वंसयति। मानं मुष्णाति। मदमपहरति। दर्पमाहन्ति। मदमवचूर्णयति। गर्वमवदारयति। हिनस्त्यहङ्कारम्। दलयति दर्पम्। कृणत्ति मानम्। संहरति दर्पम्। चूर्णयति चित्तोद्रेकम्। मर्दयति मदम्। मानमुत्सारयति। मदमपोहति। अवलेपं लुम्पति। मानमवदारयति। गर्वमपनयति। दर्पमपसारयति। लुनात्यवलेपम्। हरत्यहंकारम्। शकलयत्य-वलेपम्। अभिमानमपहरति। खण्डयति चित्तोद्रेकम्। दूरयति दर्पम्। अहंकारमु-पमर्दयति। निबर्हयति गर्वम्। सूदयति दर्पम्। उन्मूलयत्यवलेपम्। भिनत्त्य-भिमानम्। आहरत्यहंकारम्। शकलयति मानम्। अवमथ्नाति दर्पम् भदमव-सूदयति। गर्वमवलुण्ठति। अहंकारमुत्सारयति। कीर्तिं कृणत्ति। यशो लुम्पति। कीर्तिमुत्सारयति। यशः शमयति। कीर्तिं कृन्तति। यशो हिनस्ति। कीर्तिं मुष्णाति। यशः क्षिणोति। कीर्तिमपहरति। यशः संहरति। कीर्तिमाच्छिनत्ति। यशो लुम्पति। अवलेपमपनयति।

यथा—उदन्वतो दर्पमपहन्ति ते गाम्भीर्यम्। सुधागर्वं खर्वयति ते वचोमाधुर्यम्। वदान्यताभिमानमपनयसि कल्पतरोः। रतिपतेरहङ्कारमुन्मूलयसि सौन्दर्येण। मानमवमर्दयसि मृगाङ्कस्य मुखशोभया। सुधामदमुपमृद्नाति ते वचोमधुरिमा। गिरेरपि गर्वमुच्छिनत्ति ते गाम्भीर्यम्। सुधादर्पं ध्वंसयति सुभाषितम्। मृगाङ्कमानं मुष्णाति ते मुखमाधुर्यम्। मदन-मदमपोहति ते

सौन्दर्यम्। अवलेपं लुम्पसि जलधेर्धीरतया। सूदयति दर्प सुधायाः साधुभाषितम्। सुरपतेरहंकारमुत्सारयसि निजानुभावेन।

**26. अतिक्रमण-प्रतिषेध-निमीलन-निन्दाद्यर्थकैरपि धातुभिर्निर्जयार्थं निबध्नन्ति कवि-कोविदाः** कीर्तिरतिक्रामति कुमुदकान्तिम्। कीर्तिरतिशेते शशाङ्कशोभाम्। कीर्तिराक्षिपति शशाङ्कसुषमाम्। वाणी ते विलङ्घते पीयूषम्। कविसूक्तिराक्षिपति द्राक्षामाधुर्यम्। वाक्प्रवाहस्ते अत्येति सुरसरिद्धाराम्। यशस्ते विलङ्घयति कलानिधिम्। उपदेशः सतामतिशेते पीयूषम्। सुरभारतीयमत्येति सुधाधाराम्। यशस्ते शशधरशोभामतिशेते। कीर्तिरतियाति राकापतिम्। सुकविसूक्तिरत्येति सुधाम्। यशस्तव लङ्घयति कलानिधिम्। सुरसरस्वतीयमतिक्रामति पीयूषम्। सतां संगतिरत्येति कल्पलताम्। संपदियमुल्लङ्घयति कुबेरविभवम्। सतामुपदेशः प्रत्यादिशति पीयूषम्। कीर्तिस्ते निरुणद्धि सुधाकरम्। वाणीयमपाकरोति पीयूषम्। यशस्ते निराकरोति निशानाथम्। सूक्तिस्ते प्रत्याख्याति पीयूषम्। कीर्तिरियं नियन्त्रयति निशाकरम्। साधुभाषितमपाकरोति क्षपाकरम्। कीर्तिस्ते निमीलयति निशाकरम्। दानकरः करस्ते संकोचयति कल्पपादपम्। मुखं ते मुद्रयति मृणालम्। मधुरमिदमाननं ते मुकुलयति कमलम्। मुखं ते निन्दति निशानाथम्। सुकविसुभाषितमपवदति पीयूषम्। साधूसूक्तिर्जुगुप्सते सुधाम्। कीर्तिरियमाक्षिपति चन्द्रमसम्। मुखमिदमपवदति सुधाकरम्।

**27. कविमार्गे वर्जन-तर्जन-व्यर्थीकरण-हसन-लज्जितीकरणादीन्यपि विजयार्थेऽन्तर्भवन्ति। अतो वर्जनाद्यर्थकैर्धातुभिरपि निर्जयार्थं प्रकटयन्तः कवयः प्रेक्ष्यन्ते। एतत्प्रयोगस्य दिग्दर्शनं यथा–**

वर्जयसि सुधां निजवचोमाधुर्येण। हसति ते करः कल्पपादपम्। व्यर्थयसि पीयूषं निजसुभाषितेन। लज्जयति ते कीर्ती राकासुधानिधिम्। तर्जयति पूर्णिमाशशाङ्कं ते कीर्तिः। कीर्तिविभा ते तिरोदधाति शारदसुधाकरम्। लज्जयति कल्पपादपं भूपते ते करः। हससि पयोनिधिं निजगाम्भीर्येण। व्यर्थयति सुधां साधुभाषितम्। तर्जयति दन्तद्युतिस्ते कुमुदकान्तिम्। भर्त्सयति भानुमन्तं ज्ञानविद्योतः। लघयति कलाधरं ते यशः। लज्जयति सुधामिमां कविसुभाषितम्। गलहस्तयति द्राक्षां ते वचोमाधुर्यम्। नमयसि निशाकरं निजयशःशोभया। अधरयति सुधामिदं ते साधुभाषितम्। ह्रेपयसि कर्णमपि निजवदान्यतया।

भर्त्सयसि भीममपि पराक्रमेण। विफलयति दानशौण्डस्ते करः कल्पपादपम्। वर्जयसि वीरतया विक्रमादित्यमपि। निम्नयसि निजचारित्र्येण नलभूपतिमपि। तृणीकरोषि कर्णमपि दातृतया। अवहेलयसि हिमालयमपि धीरतया। कदर्थयति कर्णमपि दानकरस्ते करः। अवधीरयति धीरता ते हेमाचलमपि। निराकरोति करोयं ते कल्पपादपमपि। वदान्यतया नीचैः करोषि कर्णादीनपि। त्रपयसि वाचस्पतिमपि मतिवैभवेन। हसति हिमांशुमपि यशस्ते। न्यञ्चयति काञ्चनाऽचलमपि धैर्यं ते। तर्जयति वीरसिंहनादस्ते जलधरध्वानमपि।

**28. कविवर्णनायां शमनार्थः पानार्थकैः स्तेयार्थकैश्चापि धातुभिरभिद्योत्यमानः साहित्यसीमनि समवाप्यते। एतस्य दिग्दर्शनं यथा–**

तरङ्गमारुतोऽयमाचामति मुखकमले ते स्वेदलवं सुन्दरि। प्रपिषति पवनः प्रस्वेदलवं लोलाक्षि। कालिन्दीमन्दमारुतोऽयमाचामति श्रमसलिलमिन्दीवरनयने!। मुष्णाति मधुमासोऽयमधुना धीरतां मम। मुष्णाति शत्रूणां शौर्योष्माणमियं ते क्रूरा कृपाणलता। लुण्ठति शत्रूणां धैर्यमयं चपलश्चन्द्रहासः। द्विषामुत्साहमापिबति पारश्वधोऽयं मे। मुष्णाति मलयपवनः पथिकानां धैर्यमत्र मधौ। चोरयति चपलनयने चन्द्रमसो मनोरमतामिदमाननं ते। बलाल्लुण्ठति कङ्केल्लि–पल्लवानां लालित्यमयं ते मनोहरः करः।[1]

**29. लोकसंकेतप्रवाहमेवाऽनुवर्तमानानां वैयाकरणादिप्रमुखानामन्यान्यभाषावैज्ञानिकानामपेक्षया कवीनां भाषा काञ्चिदलंकार–झाङ्कारिणीमेव सरणीमनुवर्तमाना निसर्गतः समवाप्यते। ते हि निवासार्थकधातूनां स्थलेऽपि अवसरमाहात्म्यात् नृत्य–विश्राम–क्रीडनाद्यर्थकैरपि धातुभिरुपनिबध्नन्ति निजवक्तव्यम्।**

यथा–नृत्यति भगवती लक्ष्मीरङ्गणेषु चरित्रवताम्। विश्राम्यति कल्पलता दानरसवर्षिणि भवत्करे। क्रीडति कमलालया कवीनामावासेषु भवत्प्रभावात्। विलसति रसनाग्रे सरस्वती साम्प्रतम्। नृत्यति निकेतने कमलालया भवद्वरदानात्। सुखं विश्राम्यति लक्ष्मीर्भवनेऽस्मिन् भवतः। इन्दिराऽसौ नृत्यति मन्दिराऽन्तर्व्यवसायिनाम्। विश्राम्यति भगवती भारती भवद्वदनान्तः।

---

1. कङ्केल्लिरशोकः।

विहरति वणिजामावासे सेयमिन्दिरा संप्रति। सुखेन खेलसि वणिजामङ्गणेषु मातः कमलालये। त्वदुरसि रसाद्विश्राम्यति भगवती सेयं सरस्वती। नृत्यति निलयेषु लक्ष्मीरियं पश्चिमदिग्देशे। नृत्यति भगवतो भक्तिर्भवतो हृदयाङ्गणे। सुखं विश्राम्यति राष्ट्रे तव भगवान्धर्मः। क्रीडति कलिर्वाक्कीलानां वाग्विलासे।

**30. गुम्फनीयस्य निजविषयस्य परिष्कारार्थं, महनीयस्य कस्यचिद्वर्णनीयस्यादरदर्शनाय च अन्यार्थकधातूनां स्थाने अन्यार्थधातूनां प्रयोगः प्रायः प्रसिध्यति कविगोष्ठ्याम्।**

यथा—आगमनविषये प्रायः प्रोच्यते प्रतिभावद्भिः "भाव! विभूषय मे भवनं क्षणं चरणार्पणेन। कृतार्थय कुटीरं मे कियतेचित् कालाय। सनाथीकुरु मे सदनं सम्प्रति। पवित्रय मे प्रकोष्ठकं पादार्पणेन। पुनीहि दीनगृहं देव। ममाऽऽवासमपि साम्प्रतं कृतार्थीकुरु। दासनिवासमिमं पावय प्रभो। नाथ! सनाथय निवासमिमं दासस्य। मण्डय ममाऽऽवासं सम्प्रति सुरपते। अलङ्कुरु कुटीरमिमं दासस्य। देव! दीननिवासं संभूषय साम्प्रतम्।" **इत्यादि दिङ्मात्रमिदं प्रदर्शयेदन्यानपि पथः।**

## शास्त्रीया निबन्धाः

# रसस्वरूपं विभिन्ना रससिद्धान्ताश्च

अयं मनुष्यो यदाऽस्मिन् संसारे उत्पद्यते तदा शरीरेण साकम् अस्य अन्तःकरणमपि समुत्पद्यते। ततश्च हृदयसहितः सोऽयं मनुष्यो नानाभावाननुभवति। कदाचित् केनचित्सह प्रीतिं करोति, कदाचित् कस्यचन वस्तुनो नाशे शोकमनुभवति, कदाचिच्च कस्यचन वस्तुनो लाभाय वीरतां प्रदर्शयन् उद्यमेऽस्मिन् उत्साहमनुभवति। एतेषां रति-शोक-उत्साहादीनां भावानां संस्कारास्तस्य मनुष्यस्य हृदये वासनारूपेण अङ्किता भवन्ति। एते हि चित्तवृत्तिरूपा मनोभावाः साहित्ये स्थूलगणनया 'त्रयस्त्रिंशत्' परिगणिताः। यद्यपि-'मात्सर्य-उद्वेग-ईर्ष्या-विवेक-विनयादयः अन्येऽपि भावाः सन्ति, ये तत्तस्थलेषु प्रायः सर्वैरेव जनैरनुभूयन्ते। किन्तु अन्ये ते सर्वे भावा भरतमुनिपरिगणितेषु एष्वेव भावेषु अन्तर्भवन्ति। यथा-मात्सर्यम् असूयायाम्, उद्वेगः त्रासे, ईर्ष्या अमर्षे, विवेकः मतौ, विनयो लज्जायामन्तर्भवितुं शक्नोति। ततश्च मुनिवचनानुरोधात् प्रमुख-प्रमुखा इमे त्रयस्त्रिंशदेव भावाः साहित्ये परिगण्यन्ते।

एतेषु त्रयस्त्रिंशद्भावेषु रति-हास-शोकादयः अष्टौ भावाः प्रमुखाः सन्ति, ये हि तथा प्रबलाः, सन्ति, यत् विरुद्धैः अविरुद्धैश्चापि अन्यान्यैर्भावैरभिभूता न भवन्ति। एतेषां प्रभावो हृदयात्सहसा नाऽपगच्छति। अतएव एते अष्टौ भावाः स्थायिभावा इत्युच्यन्ते। केषांचिन्मते नाट्ये अनभिनीयमानोऽपि नवमः एको निर्वेदोऽप्यस्ति स्थायिभावः। एते रति-हासाद्या नवभावा मनुष्यस्य हृदयपटले वासनारूपेण सुस्थिरतया स्थिता भवन्ति। स्वानुकूलां स्थितिं प्राप्य एते समये-समये जागृता भवन्ति। यथा मार्गे गच्छतामस्माकं यदि कश्चिद् वृथैव आक्रोशम् आघातादिकं वा करोति, तर्हि वासनारूपेण स्थितः स क्रोधो जागरूको भवति। एते वासनारूपेण

स्थिता रत्यादयः स्थायिभावा यदा स्वतः प्रकाशमानेन आत्मनः स्वरूपेण आत्मानन्देन सह अनुभूयमानाः [अर्थात् स्थायिभावोऽपि आस्वादगोचरो भवति, तथा आत्मानन्दोऽपि] भवन्ति तदा साहित्ये परिभाषितस्य रसस्य रूपे परिणमन्ति।

'सत्-चित्-आनन्देति' आत्मनः स्वरूपं सर्वतः प्रख्यातम्। एषु आत्मनः प्रधानं रूपम् आनन्दः अज्ञानकृतेन आवरणेन आच्छादितस्तिष्ठति। यावत्कालं च आत्मनः स्वरूपस्य आनन्दस्य, रति-हासादिभिः स्थायिभावैः सह एककाले अनुभवगोचरता न भवति तावद् वासनारूपाणां रत्यादीनामनुभवो न भवति। ततश्च साहित्यशास्त्रे स्वीकृतेन विभाव-अनुभाव-संचारिणां संयोगेन (अभिव्यञ्जनाख्येन व्यापारेण) तत् अज्ञानकृतमावरणं दूरे भवति। तत्प्रभावेण आत्मानन्दाऽनुभवकर्तुः 'परिमितप्रमातृभावः' (अल्पज्ञता) विनश्यति। सांसारिको भेदभावश्च विलुप्यते। ततश्च तन्मयीभूतः सः अनुभवकर्ता आत्मानन्दसहितस्य रति-हासादिरूपस्य स्थायिभावस्य अनुभवं करोति। आत्मानन्देन सह अनुभूयमानः स स्थायिभाव एव साहित्यशास्त्रे "रसः" इत्याख्यायते।

## विभाव-अनुभावादयः

रति-हास-शोकादेः स्थायिभावस्य कारणानि साहित्येऽस्मिन् 'विभाव' पदेन उच्यन्ते। कारणं द्विविधम्, आलम्बनम् उद्दीपनं च। यथा शृङ्गाररसे-रति-रूपस्य स्थायिभावस्य उत्पादिका शकुन्तला आलम्बनकारणम्, चन्द्रोदय-वसन्त-उद्यानादीनि उद्दीपनकारणम्। रतेः अनुभवकर्तुः दुष्यन्तस्य विरहचेष्टादीनि कार्याणि अनुभावाः। तथा रतिरूपेण स्थायिभावेन सह स्वप्रेमपात्रस्य (शकुन्तलादेः) प्राप्त्यर्थं क्रियमाणाः (अनुभूयामानाः नाट्ये प्रस्तूयमाना वा) चिन्ता-व्रीडा-विषादादयः सहकारिणः व्यभिचारि (संचारि) शब्देनोच्यन्ते।

## कोऽसौ रस इति प्राकृतिकगवेषणा

इदमत्र तत्त्वं यत्-'रसो' यथा श्रव्यकाव्ये अनुभूयते तथैव दृश्य-काव्येऽपीति वास्तवी परिस्थितिः। किन्तु दृश्यकाव्ये (नाटकादिरूपकेषु)

नायक-नायिका-विदूषकादीनां पात्राणां द्वारा कथानकस्य स्वसमक्षम् अभिनीयमानतया, काव्यस्य समग्रं चरित्रं चक्षुषोरग्रे स्पष्टमुपस्थितं भवति ततश्च तदिदं प्रत्यक्षीकुर्वतः साधारणस्यापि जनस्य रसानुभवः स्पष्टतया प्रतीतिगम्यो भवति। श्रव्यकाव्ये तु नायक-नायिकादीनां सर्वापि चरित्रसामग्री केवलं मानसी (आन्तरिकी) भवति, न चक्षुर्गम्या। तत्र हि निर्मलान्तःकरणा बुद्धिमन्त एव तत्त्वग्रहणे समर्था भवन्ति। ततश्च सर्वबोध्यरूपेण रसस्य स्वरूपं हृदङ्गमं कारयितुं दृश्यकाव्यमवलम्ब्यैव रसविषयकविवेचनमत्र कृतम्। ततश्च नाटके (दृश्यकाव्ये) येन वस्तुना आनन्दः प्राप्यते सः "रस्यते आस्वाद्यते असौ रसः" इति व्युत्पत्त्या दृश्यकाव्यस्य आत्मभूतः जीवानुभूतः रसः।

१–तत्र 'कोऽसौ रसः' इति प्राकृतिकरूपेण प्रथमगवेषणायाम्-यदा वयं नाटकं पश्यामस्तदा अभिनयं कुर्वन्तं नटं दृष्ट्वा, अस्माकं प्रेमालम्बनस्य [तत् स्त्री वा स्यात्पुरुषो वा] स्मरणं भवति। वारं वारं च नाटके नटेन कृतात् अभिनयात् तस्यैव अस्मत्प्रेमालम्बनस्य अनुसंधानं, स्मरणं भवति। तादृशेन स्मरणेन चेतसि आनन्दस्याविर्भावो भवति। अतएव रति-हासादेः [अमर्षस्य, उत्साहादेर्वा] आलम्बनरूपः स विभाव एव आनन्दरूपत्वाद् 'रसः' इति प्राथमिकदशायां "भाव्यमानो विभाव एव रसः" इति रससंप्रदायस्याविर्भावः।

२–यदि आलम्बनविभाव एव आनन्ददायकः स्यात्तर्हि अभिनयरहित-दशायाम् [अर्थात् यदा स नटः दुष्यन्तादेरभिनयं न करोति, किन्तु गृहकार्यलग्नः, पठने वा व्यापृतः] तदा तं दृष्ट्वा अस्माकं न तादृश आनन्दोद्गमः। किन्तु यदा स दुष्यन्तादेर्वेष-भूषा-चेष्टादिकं करोति, तदैवाऽऽनन्दाऽवाप्तिः। ततश्च विचारपरम्परया लोकैः स्थिरीकृतं यत्-"वारं वारं भाव्यमानाः आलम्बनस्य चेष्टाः [अनुभावाः], अर्थात् अङ्गानां विक्षेपणम्, मुखादेर्नानापरिस्थितयः एव आनन्दजनकत्वात् रसरूपाः।

३–पूर्वम् उक्तवानस्मि यत्-साहित्ये यथा यथा गम्भीरमालोचनं क्रियते तथा तथा तादृशगभीराऽलोचनेन आनन्दाऽवाप्तिर्भवति।

एतदनुसारं विभावस्य–अनुभावस्य विचारोत्तरमपि निगूढे विचारे कृते आनन्दाऽवाप्तेर्मूलं न वास्तवतया प्राप्तम्। यतो हि कीदृशोऽपि चतुरो नटः पर्याप्ताः (पूर्णाः) शरीरचेष्टाः, नानाविधान् मुखविकारांश्च दर्शयेत् किन्तु येषां दुष्यन्तादीनां अभिनयं नटः करोति, तेषामन्तःकरणस्य चित्रं यदि दर्शकानां समक्षे न स चित्रयितुं प्रभवेत् तर्हि अनुभाव [चेष्टा] सहस्रेणापि दर्शकानां न आनन्दोद्भवः। किन्तु यदि यत्किञ्चिच्चेष्टयाऽपि प्रकृतस्य दुष्यन्तादेश्चित्तवृत्तिं चित्रयितुं स समर्थो भवेत् [अर्थात् लोकानां समक्षं स्पष्टमिदं प्रतीतं भवेद् यत् शकुन्तलाविरहे दुष्यन्तः एवं विकलः, एवमुत्कण्ठितः, एवं संतप्तश्चाऽभवत्] तदैव दर्शकानामानन्दः। ततश्च–"पुनः पुनरनुसंधीयमानः (भाव्यमानः) सञ्चारी एव रसः" इति समभूत्तत्त्वाऽऽविर्भावः।

एतदनन्तरं पुनस्तत्त्वालोचनं साहित्येऽस्मिन् प्रवृत्तम्। तथा कृते सति दृष्टं यत्–कस्मिंश्चित् अभिनये विभाव-अनुभाव-संचारिषु सर्वेषु यथावत् वर्तमानेष्वपि आनन्दाविर्भावो न भवति। किन्तु कुत्रचिद् विभावेनैव, कुत्रचित् अनुभावेन, क्वचित्तु संचारिणैव आनन्दोद्गमो भवति। एतदुपरि गूढविचारे कृते निर्धारितं यत् त्रयाणां मध्ये विभावः, अनुभावः, सञ्चारी वा यः कश्चित् चमत्कारकारी, लोकानामानन्दजनको भवति, स एव आनन्दोत्पादकत्वाद् 'रस' रूपो भवति। यदि तु एकोऽपि चमत्कारकारी न स्यात्तर्हि कोऽपि रसरूपतया न परिणमते।

एतदनन्तरं भाव–संचारिभावानामपि शनैः शनैर्गवेषणमारब्धम्। उद्वेग-विवेक-मात्सर्यादयोऽन्येऽपि बहवो भावा अभूवन्, किन्तु तेषु ८ अथवा ९ भावा रत्यादयः प्रमुखाः सन्ति, येषां संपूर्णेऽपि नाट्ये सर्वतः प्रतीतिर्भवति। इमे भावा अन्यैर्भावैः अभिभूता न भवन्ति। प्रत्युत अन्ये भावाः, सेवका इव इमान् भावान् भूषयन्ति। ततश्च नाट्यमात्रे स्थिरत्वात् 'स्थायिभावाः' इति प्रसिद्धा अभूवन्। अन्ये तु हर्ष-स्मृति-लज्जाद्याः कुत्रचित् प्रतीयन्ते, कुत्रचिन्न, इति ते सामान्यतः सञ्चारिभावास्त्रयस्त्रिंशत् परिगणिता अभूवन्। उद्वेग-विवेक-मात्सर्यादयः एष्वेव अन्तर्गता अभूवन्निति नाट्याचार्यस्य मुनेर्भरतस्य त्रयस्त्रिंशदिति भावगणना सुस्थिराभवत्।

इतः परं स्थायिभावानां गवेषणानन्तरं, बहूनामभिनयानां दर्शनोत्तरं विचारशीलैर्मीमांसितं यत् पूर्ववर्णिता विभाव-अनुभाव-व्यभिचारिभावाः

पृथक्-पृथक्, अथवा सम्मिलिताः सन्तोऽपि रसरूपेण न परिणमन्ति। यतो हि सर्वस्मिन् अपि अभिनये यः आनन्दः अस्माभिरनुभूयते, सः केवलं विभावा-नुभाव-सञ्चारिभिः न प्रतीयते। किन्तु तस्याऽऽनन्दस्य कारणमस्ति सा चित्तवृत्तिः, यस्य नाम रति-हास-शोकादि-स्थायिभावः। किन्तु रति-हासादयस्तदैव आनन्दरूपे परिणमन्ति यदा विभावः (शकुन्तलादिः) रत्यादिरूपां चित्तवृत्तिम् उत्पादयति, अनुभावाः (चेष्टादयः) रतिरूपस्थायिनः सकाशात् उत्पद्यन्ते (अर्थात् स्थायिनः कार्याणि), चिन्तादयः सञ्चारिणश्च तं रत्यादि-स्थायिभावं परिपुष्टं कुर्वन्ति। ततश्च स्थायिभावः सर्वेष्वेषु प्रमुखः, अन्ये उपकरणभूताः। किन्तु विभावादीनामेषां संयोगे सति सः रत्यादिः स्थायिभावः रसरूपः सन् अस्मान् आनन्दयति।

सोऽयं परम्परातः प्रचलितो रसगवेषणात्मको विमर्शो, नाट्यशास्त्रस्य परमाचार्येण भरतमुनिना 'नाट्यशास्त्रे' सूत्ररूपेण स्थिरीकृतः–"विभावानुभाव-व्यभिचारिसंयोगाद् रसनिष्पत्तिः' इति। एतदनन्तरं मीमांसक-नैयायिकादयोऽनेके आचार्याः सूत्रस्यास्योपरि निजनिजान् विचारान् प्रकटय्य, अनेकेषां सम्प्रदायानां सृष्टिमकार्षुः। पठनपाठनादिषु सर्वतः प्रख्याते काव्यप्रकाशे सर्वतः प्रथमसम्प्रदायो मीमांसकस्य भट्टलोल्लटस्य नाम्ना निर्दिष्टः। तेन हि सूत्रस्यास्य व्याख्या कृता–'कामिन्यादिभिः आलम्बनविभावैः रत्यादिः स्थायिभावः उत्पाद्यते, उद्यान-वसन्तादिभिः उद्दीपनविभावैः स उद्दीप्यते। कटाक्षादिभिः अनुभावैः सः प्रतीतियोग्यः क्रियते [यतो हि आश्रयस्य दुष्यन्तादेः चेष्टां दृष्ट्वा सर्वैरपि प्रतीयते यत् अस्य दुष्यन्तस्य शकुन्तलायां रतिः अस्ति]। उत्कण्ठादयः सञ्चारिणश्च तं रतिभावं परिपुष्टं कुर्वन्ति। तथा च क्रमेण-जन्यजनकभावात्, गम्य-गमकभावात्, पोष्यपोषकभावरूपात् च संयोगात् विभावानुभावसंचारिणां संबन्धात् स्थायिभावरूपस्य शृंगारादिरसस्य क्रमेण उत्पत्तिः, प्रतीतिः, पुष्टिश्च भवतीति तस्य तात्पर्यम्।

अस्मिन् मते-रसस्योत्पत्तिः दुष्यन्तादौ एव भवेद् यतः विभावादयः (शकुन्तलादयः) दुष्यन्तसंबन्धिन एव। ततश्च अतत्संबन्धिभिः विभावादिभिः सामाजिकानां कथं रसोद्भवः? इति शङ्कां मनसिकृत्य श्रीशङ्कुकस्य नाम्ना नैयायिकानां मतम्। तेषामनुसारम्–'स्थायिनो रत्यादेः विभावादिभिः सह अनुमाप्य-अनुमापकभावरूपसंबन्धात् रसस्य निष्पत्तिः अनुमितिर्भवति' इति।

यथा कुञ्झटिकाव्याप्ते प्रदेशे धूमस्याऽभावेऽपि धूमसहचरितस्य वह्नेरनुमानं भवति। तथा नाट्यनिपुणस्य नटस्य चातुर्येण 'ममैवेते विभावादयः' इतिरूपेण प्रदर्शितैः ,(वास्तवतया नटे असद्भिरपि) विभावादिभिस्तन्नियता रतिः अनुमीयते। यद्यपि लोके अनुमानेन न आनन्दो भवति, अपि तु प्रत्यक्षेणैव। किन्तु नाट्यप्रदर्शितानां रति-तद्विभावादिपदार्थानामीदृशं सामर्थ्यं यत् अन्यानुमानस्थलाद्विलक्षणतया, अनुमीयमानाऽपि सा रतिः सामाजिकान् आनन्दयति, इति तेषां मतस्य निष्कर्षः।

श्रीशंकुकादीनां नैयायिकानां मते रसस्याऽनुमानं क्रियते तदिदं लोकप्रतीतितो विरुद्धम्। अनुमानेन न आनन्दोद्भवः, अपि तु प्रत्यक्षेण। अत एव सांख्यशास्त्रानुसारेण भट्टनायकादीनां तदिदं मतम्–

शब्दस्य तिस्रो वृत्तयः (व्यापाराः) अभिधा, भावना, भोगश्च, इति। काव्ये नाट्ये वा अभिधया शकुन्तलादिशब्दानां मुनिकन्यादिरर्थः। ततो भावकत्वव्यापारेण अनुसन्धाने कृते काव्यवर्णितानां नायक-नायिकादीनां दुष्यन्त-शकुन्तलादित्वं निवृत्तं भवति। ते सामान्यतया पुरुष-रमणीत्वेन उपतिष्ठन्ति। ततश्च शकुन्तलादिषु परनारीत्वेन अगम्यात्वस्य या प्रतिबन्धिका प्रतीतिरासीत्तस्य निवृत्तिर्जायते। तृतीयेन भोजकत्वव्यापारेण रजस्तमसोः अभिभवो भवति। सत्त्वस्य च उद्रेको भवति। ततश्च सत्वजनितः चैतन्यरूपः आनन्दः [दुःखेभ्यो विश्रान्तिः, निवृत्तिः] जायते। तादृशेन साक्षात्कारेण [अनुभवेन] विषयीकृतो रत्यादिः स्थायी भावो रसरूपो भवति। अस्मिन् मते भावकत्वव्यापार एव नवीनः स्वीक्रियते। भोगस्तु व्यञ्जनया अज्ञानावरणम् अपसार्य, भग्नावरणाचिद्विशिष्टो रत्यादिः, रत्यवच्छिन्ना भग्नावरणा चिदेव वा रसत्वेन अनुभूयते, तथा भोजकत्वव्यापारेण सत्त्वोद्रेके सति निजचित्स्वभाव-निर्वृत्तिरूपेण अनुभवेन विषयीकृतो रत्यादिः रसत्वेन स्वीक्रियते।

एतदनन्तरं 'नव्यास्तु' इति शीर्षकेण अन्येषां विदुषां मतमुपतिष्ठति। एते कथयन्ति यत् काव्ये अथवा नाटके, शकुन्तलादि विभावानामभिधया ज्ञाने सति, व्यञ्जनावृत्त्या शकुन्तलादिषु विभावेषु दुष्यन्तादेः रतिः अस्माभिः प्रतीयते। तदनन्तरं नाटकद्रष्टृणां सहृदयतारूपेण पुनः पुनरनुसंधानरूपेण भावनाख्यदोषेण अस्माकमन्तः-करणमज्ञानाच्छादितं भवति। तेन वयमात्मानं दुष्यन्तं भावयामः। ततश्च कल्पितदुष्यन्तत्वाच्छादिते आत्मनि सद्विलक्षणः

शकुन्तलादिरतिरूपः स्थायी उत्पद्यते (प्रतीयते)। प्रतीयमानः स रत्यादिः स्थायी एव रसो भवति। यथा अज्ञानावृते अन्तःकरणे सति शुक्तौ रजतस्य प्रतीतिः, तथा अज्ञानावृते अन्तःकरणे स्थायिनो रत्यादेः प्रतीतिरिति नव्यानां मतम्।

एतदनन्तरं स्वल्पं स्वल्पं भेदमादाय परे तु इत्यादीनि अन्यान्यपि मतानि रसगङ्गाधरे प्रतिपादितानि, येषां संख्या एकादश परिगण्यते। किन्तु प्रधानतया अभिनवगुप्त-मम्मटभट्टादीनां मतानि प्रतिपादितानि। सर्वेषां च मतानुसारं 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः' इति भरतसूत्रस्य व्याख्यानं दर्शितं पण्डितराजेन।

पण्डितराजस्वीकृतं रसस्वरूपं, तद्व्याख्या च संक्षिप्येत्थं प्रस्तोतुं शक्यते। समुचितललित- सन्निवेशचारुणा अर्थात् रस-वर्णनोचितसुन्दरवर्णमयेन काव्येन उपस्थापितैः, रसानुभवकर्तुः सहृदयस्य सहृदयतावशात् प्रादुर्भूतस्य भावनाविशेषस्य माहात्म्येन 'इयं शकुन्तला दुष्यन्तस्य रमणी' इत्यादौ परिमितिप्रमातृभावे दूरीभूते सति, मनसि आविर्भूतैः, अतएव लोकतो भिन्नतया अलौकिकैः साहित्ये विभावशब्दव्यपदेश्यैः शकुन्तलादिभिः सहकारिभिः (साहित्ये व्यभिचार-संचारिपदव्यपदेश्यैः) च। एतैः विभावानुभावसंचारिभिः त्रिभिरपि संभूय (अर्थात् रसव्यञ्जनाख्यस्य अलौकिकव्यापारस्य उत्पादनकार्ये संगत्य) सः अलौकिकः व्यञ्जनाख्यो व्यापारः उद्भाव्यते प्रकटीक्रियते। तेन व्यञ्जनाख्यव्यापारेण आत्मनः स्वस्वरूपस्य आनन्दांशस्य आवरणम् अज्ञानं निवर्त्यते। ततश्च निवृत्तम् अज्ञानं यस्य ईदृशेन, अत एव परिमितप्रमातृभावं परित्यज्य अपरिमित-प्रमातृभावविशिष्टेन प्रमात्रा अर्थात् रसानुभवकर्त्रा सामाजिकेन, कर्तृभूतेन स्वस्वरूपम् [रसानुभवकर्तुः आत्मनः वास्तवं स्वं रूपम्] यः आनन्दः। [यतोहि आत्मा सत्-चित्-आनन्दस्वरूपः] तेन आनन्देन सह गोचरीक्रियमाणः, पूर्वतो वासनारूपेण स्थितः रत्यादिः स्थायी रसः। अर्थात् यस्मिन् समये रत्यादिस्थायिभावःअनुभूयते तस्मिन् समये, व्यञ्जनाख्येन अलौकिकव्यापारेण अज्ञानरूपस्य आवरणस्य निवृत्त्या आत्म-स्वरूपः आनन्दोऽपि गोचरीक्रियते। ततश्च आत्मानन्देन सह गोचरीक्रियमाणो रत्यादिः स्थायिभाव एव रसः। इति पण्डितराजकृतलक्षणस्य आशयः।

**पण्डितराजकृतलक्षणस्य विशेषः**

पण्डितराजकृतस्यास्य लक्षणस्य विशेषस्त्वयमस्ति यदिदंप्रथमतया स मानवीयां मानसीं वृत्तिं विश्लिष्यन् रसास्वादस्वरूपं विशदीकरोति। तस्याशयोऽयमेव यद्रसचर्वणायां य आनन्दः स किंस्वरूप इति जिज्ञास्यमाने तदिदमभ्युपगन्तव्यं सत् सहृदयहृदये या भावप्रवणता विराजते संस्काररूपेण, तेन विभावादि-चर्वणा गहनतयाऽन्तःकरणे समुत्पद्यते, तदनु रत्यादयः स्थायिभावाश्चित्स्वरूपे आनन्दे संप्रविशन्ति, तमुपगूहन्ति, ततश्च तत्तत्-स्थाय्युपहिताकाराऽऽनन्दानुभूतिरुपतिष्ठते। सा च किमाकारा? समाधाविव योगिनः। सर्वमिमं दार्शनिकं शब्दजालं लौकिकेनैकेन सुबोधेन वाक्यांशेन स्पष्टीकुर्वन् पण्डितराजो यद् वक्ति तत् कियत्सरलं सर्वजनबोध्यं चेति द्रक्ष्यन्ति भवन्तः सर्वेऽपि। "तन्मयीभवनमिति यावत्।" इयमेव हि रसानुभूतिर्यत् विभावादिचर्वणावशाच्चित्तवृत्तिस्तन्मयी भवति। चित्तवृत्तिरियमन्तः-करणवृत्तिरेव भवति, मनसश्चित्तस्य, बुद्धेश्चान्तःकरणत्वेनाभ्युपगमात्, किन्तु स्थाय्युपहितस्वस्वरूपो य आनन्दः स नान्तःकरणवृत्तिरूपः, अलौकिकत्वात् तस्य। इत्थं च तादृशी तन्मयता यादृशी योगिनो भवति, रसस्य वास्तविकी मूर्तिरिति स्पष्टीकरणं पण्डितराजस्य प्रातिभं कौशलं प्रकटयति।

सेयं तन्मयता सर्वविधं रसास्वादं प्रतिनिदधाति, सर्वविधं काव्यास्वादं प्रतिनिदधाति, सर्वविधं कलास्वादमपि प्रतिनिदधातीति नापरोक्षं प्रेक्षावताम्। भग्नावरणा चिदेव रस इति विवृण्वन् पण्डितराजो रसस्य मूलं यत् स्वरूपं व्याख्याति तस्य त्रिकालाबाधितत्वं, सर्वदेश-संगतत्वं च स्फुटमेव। चित्तवृत्ते-स्तन्मयीभवनमेवाद्वैतादिवेदान्तविधानां शब्देषु चिदंशादिभिरावरणभंगादिभिश्च विविधैः पदैरभिव्यज्यते तेन। तन्मयीभवनमिदं सर्वविधसौन्दर्यास्वादसाधारणम्। तदिदं पण्डितराजस्य सुचिरमननमन्थनोद्गतनवनीतरूपम्। अत एव स मननतरितीर्णविद्यार्णवः।

अयं हि रसोऽलक्ष्यक्रमव्यङ्ग्यः। पानकरसन्यायेनाऽस्य संश्लिष्टा, समन्विता च चर्वणा भवति किन्तु तत्तत्स्थाय्युपहितत्वादुपाधिभेदेन शृङ्गारादयोऽस्य भेदा उदाहृताः प्राग्भिः। अष्टावेव रसा नाट्येषु इति केचित्। अपरे नवरसानामनन्ति। नव्यास्तु भक्ति-वात्सल्यादीनन्यानपि रसानूचुः।

सोऽयं विषयस्तत्तेषु पाठ्यग्रन्थेषु सुशको द्रष्टुम्। रसानामेषां काव्येषूपनिबन्धनं सुगृहीतनामधेयैर्बहुभिः कविभिः कृतमस्ति। पण्डितराजेनापि स्वनिर्मितैरेव पद्यैरुदाहृताः सर्वे रसभेदाः। अत्र निदर्शनविधया रसप्रभेदाऽऽधृतानि कतिपयानि मामकीनानि पद्यानि प्रस्तुवन्नुपसंहरामि प्रबन्धमिमम्।

**शृङ्गारो यथा**

**याता निजजनकनिकेतमुपयाता, पति-**
**रुषसि विदेशान् प्रति याता शयितोऽधुना।**
**श्वश्रूरियमन्धा निशि शय्यायां निमग्ना भवेत्,**
**देवरोऽपि कार्यप्रतिबन्धादयितोधुना।**
**मञ्जुनाथ मेघमण्डलेन मेचकाभं नभो**
**भवनेऽहमेका न भोः सुस्था भयतोऽधुना।**
**क्षम्यतां दिनान्तसमयागतचतुरपान्थ**
**विवशा नितान्तमहमावासे यतोधुना।**

अत्र स्वयंदूतिका नायिका सायंकालोपगतं कञ्चित्पान्थं प्राप्य स्वाभिलाषं युक्त्या सूचयति। विभावानुभावाः, उत्कण्ठा-चिन्तादयः संचारिणश्च सर्वेऽपि संभूय, स्वयंदूतिकायाः पान्थालम्बनां रतिं व्यञ्जयन्तीति स्पष्टः शृङ्गारः।

किन्तु यत्र विभावः, केवलाऽनुभावः केवलः संचारिभावस्तत्र इतरद्वयस्य आक्षेपेण, विभावानुभावसंचारिणां त्रयाणां सहभावं संपाद्य शृङ्गाररसस्य अभिव्यञ्जनं स्वीकार्यम्। इति साहित्यकाराणां समयः।

**केवलोऽनुभावो यथा**

**नयनविलोक एव हृदयनिलीनं प्रियं**
**जानती न मौग्ध्याद् हृदयं च कुचबन्धुरम्।**
**ताम्यति नवीनरोमरेखयां सहैव जात-**
**मेषा विदती न मानसस्य महदन्तरम्।।**

**सपदि सुसज्जसुखसदनेऽपि मञ्चगता**
**मानसिकभावैः श्रिता पञ्चशरपञ्जरम्।**

**अधुनाऽनधीननवनायके निलीनमना**
**दूयते नवीनमीननयना निरन्तरम्।।**

अत्र हि अज्ञातयौवनायाः मुग्धायाः प्रियानुरागे चेष्टादिकमेव प्रधानतया वर्ण्यते। नायकरूपस्यालम्बनस्य संचारिणां च सुस्पष्टो न निर्देशः इति प्रकरणवशात्तेषामाक्षेपः स्वतो भवति।

**यथा वा विरहिणी**

**कृशकरकञ्जशायिकोमलकपोलतला**
**मुकुरमनञ्जनदृङ् मन्थरमवेक्षते।**
**सदयसखीभिरुपनीतं वेषभूषादिकमुष्ण-**
**मुच्छ्वसन्ती विपरीतं पर्यवेक्षते।।**

**मञ्जुनाथ काञ्चनपिशङ्गदूनदेहलता-**
**मनुजगतागतेषु तमिव प्रतीक्षते।**
**निबिडनिबद्धामेकवेणीमियमन्यमना**
**वारं वारमेणीचलनयना निरीक्षते।।**

अत्र विरहिण्या विषादेन स्थितिः, उष्णोच्छ्वासाः प्रियतमस्य मार्गनिरीक्षणम्, जटीभूतकेशानां वारं-वारमालोकनं चेत्यादयः अनुभावा एव प्रधानतया वर्णिताः। आलम्बनविभाव-सञ्चारिणौ च प्रकरणात् आक्षेप्यौ।

**केवलो विभावो यथा**

**कज्जलमलिनजलवाहकनिबिडघटा**
**गाहते गगनतटान्तमतिगहना।**
**पुष्पितकदम्बवनवीथीगन्धवाहिनीयं**
**वाति वायुलहरी समिद्धकामदहना।।**

**श्यामलजलदगतचञ्चला चमत्कुरुते**
**निकषनिहितहेमरेखारुचिवहना**
**नायक-विरहपञ्चसायकविकलमना**
**नेक्षते नवीनवधूरम्बरमसहना।।**

अत्र विरहिण्याः कृते मेघाडम्बरादिरुद्दीपनविभाव एव प्रधानतया वर्ण्यते।

# काव्यलक्षणं तद्विषये विभिन्न-मतानि च

संसारेऽस्मिन् मानवसभ्यताप्रवर्तकानामार्याणां वेद-उपनिषत्-स्मृत्यादिभिर्ग्रन्थैर्यथा सर्वतो महत्त्वं स्थापितमभूत्, तथा भारतीयैः काव्यैरपि आर्याणां गौरवं भूमण्डले सर्वतो विख्यातमभूत्। न केवलं भारतवासिन एव, अपि तु पारेसमुद्रवासिनः पाश्चात्यपण्डिता अपि महाकविकालिदासादीनां काव्यैः प्रभाविताः सन्ति। एतेषां काव्यानां विवेचनार्थं, काव्यानामेषां निर्माणार्थं च साहित्यशास्त्रस्याऽऽविर्भावोऽभवत्। पूर्वकाले साहित्यशास्त्रमिदम् अलंकारशास्त्रनाम्ना प्रसिद्धमभूत्। यतस्तस्मिन् समये सहृदयानामाकर्षकतया अलंकारा एव काव्येषु प्रधानतामलभन्त। किन्तु काव्यानां मीमांसापरेऽस्मिन् साहित्यशास्त्रे प्रारम्भतः प्रभृति अद्यपर्यन्तं काव्यानां विषये अतीव गम्भीरमालोचनमभूत्। यथा यथा च मार्मिकमालोचनमभूत् तथा तथैव साहित्यशास्त्रस्याऽस्य उत्तरोत्तरं वृद्धिरभूत्। साहित्यशास्त्रस्य तत्त्वसमृद्ध्या च काव्येऽपि उत्तरोत्तरं चमत्कारवृद्धिरभूत्। यतो हि साहित्यशास्त्रे गभीरमालोचनमेव जीवितस्थानीयमुक्तं कोविदैः। यथा हि सुप्रसिद्धमिदम्–

**"संगीतमथ साहित्यं सरस्वत्याः स्तनद्वयम्।**
**एकमापातमधुरमन्यदालोचनाऽमृतम्।।"** इति।

अनेन साहित्यशास्त्रेण काव्यस्वरूपस्य जिज्ञासां, तत्परिभाषानिर्माणाय लक्ष्यग्रन्थानाम् आलोचनां च कृत्वा काव्येषु कीदृशं साररूपममृतं निःसारितमिति भवतां पुरस्तान्निवेद्यते–

## काव्यस्य स्वरूपम्

सर्वतः पूर्वं काव्यसंबन्धी विचारः अग्निपुराणे प्राप्यते। तत्र हि काव्यस्वरूपमुक्तं–"संक्षेपात् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली। काव्यम्।"

अर्थात् यः किलाऽस्माकं विवक्षितोऽर्थो भवति, तस्य ईदृशैः पदैः प्रकाशनं भवेद् येषु पदेषु आवश्यकतातोऽधिको विस्तारो न भवेत्। न च अर्थबोधविषये काचिन्न्यूनतैव भवेत्। तथा च अभीष्टार्थबोधकः पदसमूह एव काव्यमिति अग्निपुराणसम्मतं काव्यलक्षणम्।

एतदनन्तरम् अलंकाराचार्येषु सर्वतः पुरातनेन दण्डिना काव्यादर्शे काव्यस्वरूपं विचारितम्। किन्तु सोऽपि अग्निपुराणसंमतमेव काव्यलक्षणं स्वीचकार, तस्य मते काव्यस्य शरीरमस्ति–'इष्टार्थव्यवच्छिन्ना पदावली।' अर्थात् अभीष्टार्थबोधकः पदसमूह एव काव्यम्। अत्र इदं दृढतया सर्वैरवधेयं स्यात् यत् सर्वतः प्रथमम् आरम्भे स्वरूपमासीत् "पदावली काव्यम्" इति। अर्थात् अभीष्टार्थबोधकः शब्दसमूह एव काव्यनाम्ना व्यवह्रियते स्म।

एतदनन्तरम् आलंकारिकमूर्धन्यस्य रुद्रटस्य काव्यसंबंधी विचारोऽस्माकं संमुखमायाति। तेन हि विस्तृत्य काव्यस्वरूपं प्रकटीकृतं यत् "गद्यस्य पद्यस्य वा स्वरूपे पदसंघटनारूपं यत्काव्यं कविरुपस्थापयति, तेनाऽस्माकं हृदये कविवर्णितः अर्थोऽपि हि चमत्कारजनकेन रूपेण उपतिष्ठति। अर्थात् अभीष्टार्थबोधिका पदावली यथाऽस्माकं हृदये उपतिष्ठति, तथा चमत्कारकरूपेण संघटितः अर्थोपि अस्माकं हृदये समागच्छति। यतो हि चमत्कारकरूपेण पदसमूहो यथा कविना संघटितः तथा तेषां पदानामर्थोपि च तेन कविनैव संघटितः।" ततश्च "शब्दश्च अर्थश्चेति शब्दार्थौ काव्यम्" इति रुद्रटः काव्यस्वरूपमाह [इत आरभ्यैव शब्देन सह अर्थस्यापि काव्यकोटि–भुक्तत्वं प्राचलत्, इति न विस्मर्तव्यं प्राज्ञैः]

एतदुत्तरं साहित्यशास्त्रे सुप्रथितस्य वामनस्य काव्यसंबन्धी विचारः समुपगच्छति। अयमपि कविना संघटितौ शब्दार्थौ एव काव्यतया स्वीकरोति। किन्तु एतयोः शब्दार्थयोर्मध्ये चमत्कारकता अपेक्षिता। यावत्कालं शब्दार्थयोमध्ये कापि आकर्षकता न भवेत् तावत्कालं कोपि सहृदयः काव्यं श्रोतुमभिमुखो न भवेत्। ततश्च शब्दार्थयोर्मध्ये चमत्कारोत्पादनार्थं गुणालंकारौ संयोजनीयौ। शब्दार्थयोर्दोषाश्च दूरीकरणीयाः। वामनेन प्रोक्तं निजसूत्रेषु–"सौन्दर्यमलंकारः। स हि दोषगुणालंकारहानादानाभ्याम्।" अर्थात् दोषाणां हानेन (त्यागेन), गुणालंकाराणां च आदानेन सः अलंकारः अर्थात् सौन्दर्य भवति। ततश्च

"दोषहीनौ गुणालंकारसंस्कृतौ शब्दार्थौ काव्यम्" इति वामनसंमतं काव्यलक्षणं सिद्ध्यति।

एतदनन्तरं साहित्यशास्त्रेऽस्मिन् युगान्तरं प्रवर्तते। एतद्युगप्रवृत्तेः पूर्वं काव्ये चमत्कारजनकं तत्त्वं गुणालंकारौ आस्ताम्। किन्तु आनन्दवर्द्धनाचार्येण मार्मिकीमालोचनां कृत्वा एतत्तत्त्वमन्विष्टं यत् केवलं सुन्दरशब्दार्थसंघटनेनैव काव्ये चमत्कारोत्पत्तिर्न भवति। किन्तु अन्येषां शास्त्राणामपेक्षया कविसंघटितयोः शब्दार्थयोर्मध्ये एको महान् विशेषोऽस्ति, स हि व्यङ्ग्यार्थरूपः। यावत्कालं ध्वनिपर्यायो व्यङ्ग्यार्थो न भवति तावत् काव्ये वास्तवश्चमत्कारो नाविर्भवति। आनन्दवर्धनाचार्यस्य ग्रन्थे ध्वन्यालोके ध्वनेर्निरूपणमेव प्रधानो विषयः। किन्तु प्रसङ्गाऽऽपतितैस्तेषामक्षरैः प्रतीयते यत् तेऽपि–"शब्दार्थशरीरं तावत् काव्यम्" इति स्वीकुर्वन्ति।

एतदुत्तरं साहित्ये सुप्रभितस्य भोजराजस्य काव्यविचारः संमुखमुपैति। तेनापि सरस्वतीकण्ठाभरणे–

**निर्दोषं गुणवत्काव्यमलंकारैरलंकृतम्।**
**रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति।।**

इति ब्रुवाणेन यत् काव्य-स्वरूपं सूचितं तेन लक्षणेन स्पष्टं प्रतीयते यद् भोजराजोऽपि शब्दार्थयोरेव काव्यत्वमङ्गीकरोति यतः स हि 'रसान्वितम्' इति काव्यस्य विशेषणमाह। रसस्य च संबंधः साक्षात् अर्थेनैवाऽस्ति। एवमेव अलंकारा काव्यत्वं अपि शब्दे अर्थे चेत्युभयत्र तिष्ठन्ति। ततश्च भोजोऽपि शब्दार्थयोरेव काव्यत्वं स्वीकरोतीति निश्चेतव्यं भवति।

एतदुत्तरं सर्वजगत्प्रसिद्धस्य आलंकारिकशिरोमणेर्मम्मटाचार्यस्य सुप्रसिद्धं काव्यलक्षणं संमुखमागच्छति। एष हि वामनसंमतं "दोषहीनौ गुणालंकारसंस्कृतौ शब्दार्थौ काव्यम्" इत्येव काव्यस्वरूपं स्वीकरोति। किन्तु एतन्मते अलंकाराणां नित्यं वर्तमानता नाऽऽवश्यकी। यदि कुत्रचित् अलंकाराः स्पष्टं न प्रतीयेरन्, तत्रापि काव्यत्वस्य हानिर्न भवति। अतएव **"तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि"** इति मम्मटसंमतं काव्यलक्षणम्। अर्थात् दोषरहितौ गुणसहितौ, प्रायः सालंकारौ, कुत्रचित्तु अस्पष्टालंकारौ अपि शब्दार्थौ काव्यं भवतः। मम्मटस्येदं तात्पर्यं यत् सहृदयानामाकर्षणार्थं

शब्दार्थयोर्मध्ये कश्चिच्चमत्कार आवश्यकः। ततश्च यत्र अलंकारः स्पष्टं न प्रतीयते–यथा "यः कौमारहरः स एव हि वरः" अत्र स्पष्टो न कश्चिदलंकारः। किन्तु विप्रलम्भंशृङ्गारस्य स्फुटत्वात् रसकृतश्चमत्कारः सहृदयानाकृर्षतीति अस्य काव्यत्वे न काचिद् बाधा।

एतदग्रे पीयूषवर्षेत्युपाधिधारिणः चन्द्रालोककारस्य जयदेवस्य काव्यलक्षणं समागच्छति। जयदेवात्पूर्ववर्तिभिरालंकारिकैः शब्दार्थयोः शोभाकारका ये ये धर्माः प्रकाशितास्ते ते सर्वेऽपि महाभागेनानेन निजकाव्यलक्षणे निर्दिष्टाः। अत एव विविधविशेषणविशिष्टं सुदीर्घमेतन्निर्मितं लक्षणमस्ति। यथा–"**निर्दोषा लक्षणवती सरीतिर्गुणभूषणा। सालंकाररसाऽनेकवृत्तिर्वाक् काव्य-नामभाक्।।**" अर्थात् निर्दोषत्वादिविशेषणविशिष्टा वाक् अर्थात् शब्दार्थौ काव्यम्, इति।

एतस्मात्परम् साहित्यदर्पणकारस्य विश्वनाथस्य काव्यलक्षणमस्माकं विचारार्थमुपतिष्ठति। मया हि प्रारम्भे अलंकाराऽपरपर्यायस्य साहित्यशास्त्रस्य सोयं विशेषः सूचितोऽस्ति यत् साहित्ये यावत्किल मार्मिकमालोचनं भवति तावदेव साहित्ये उत्तरोत्तरममृतस्याऽऽविर्भावो भवति। एतदनुसारं साहित्येस्मिन् आनन्दवर्धनाचार्येण वस्तु-अलंकार-रसेति त्रिविधो ध्वनिः काव्यस्यात्मा स्वीकृतः। मम्मटभट्टादिभिश्चालंकारिकैः काव्यप्रकाशादिषु स्वीयेषु ग्रन्थेषु एतेषां त्रिविधानामपि व्यङ्ग्यानां चमत्कारकतया जीवितस्थानीयत्वं स्थापितम्। किन्तु उत्तरोत्तरं मार्मिकाऽऽलोचनप्रक्रियया शनैः शनैर्गभीरगवेषणायां जातायां त्रिविधानामपि व्यङ्ग्यानां मध्ये चरमव्यङ्ग्यस्य रसस्यैव काव्ये चमत्काराधायकत्वं सिद्धमभूत्। अतएव विश्वनाथेन काव्यलक्षणं निर्धारितं यत् "**वाक्यं रसात्मकं काव्यमिति।**" अर्थात् सर्वेषु व्यङ्ग्येषु प्रधानभूतो रसो यस्मिन् चमत्कारकतया जीवनाधायको भवति तादृशं वाक्यं काव्यमित्युच्यते काव्ये रसस्य आत्मत्वं (जीवनाधायकत्वम्) साहित्यदर्पणेनैव प्रथमतया साधितमिति सर्वतः प्रसिद्धिः। किन्तु एतस्मात् पूर्वं केशवमिश्रेण "अलंकारशेखरे" तदिदमुद्धृतं यत्–"अलंकारसूत्रकारो भगवान् शौद्धोदनिः काव्यस्वरूपमेवमाह– "**काव्यं रसादिमद्वाक्यं श्रुतं सुखविशेषकृत्**"। अर्थात् यस्मिन् वाक्ये रसः, आदिपदग्राह्याः अलंकाराश्च भवन्ति, तत्काव्यम्। अलंकारसूत्रकारस्य मतेन यस्मिन् काव्ये चमत्कारजननाय रसो भवेत्,

तदभावे अलंकारो वा भवेत्, तद् द्विविधमपि "काव्य" पद बोध्यं भवति। साहित्यदर्पणकारेण तु केवलस्य अलंकारस्य सत्तायां काव्यत्वं न स्वीकृतम्। अत एव "रसादिमद्वाक्यं" एतद्गतेन आदिशब्देन 'भाव-रसाभासादयो गृहीताः।' ततश्च रस-भाव-रसाभासादयो यस्मिन् वाक्ये चमत्कारकारका भवन्ति तादृशं वाक्यं काव्यमिति विश्वनाथेन काव्यलक्षणं प्रसेधितम्।

**काव्यलक्षणस्य विमर्शः**

अग्निपुराणमारभ्य साहित्यदर्पणपर्यन्तं सर्वैरेव आलंकारिकैः काव्यस्वरूपं विचारितम्। प्रारम्भे-येन शब्दसमूहेन अभीष्टार्थस्य अर्थात् लोकानामाह्लादकस्य मनोरमस्याऽर्थस्य प्रतीतिर्भवति तादृशः पदसमूहः काव्यम्, इत्यासीत् काव्यलक्षणम्। ततः क्रमेण विचारक्षेत्रस्य विस्तारः अभूत् यत्-काव्यत्वेन स्वीकृतः स पदसमूहः केवलं मनोरमस्य अर्थस्य प्रतिपादक एव न भवेत्, अपि तु तस्मिन् पदसमूहेऽपि मनोरमता अपेक्ष्यते। ततश्च रमणीयस्य अर्थस्य प्रतिपादको मनोरमः शब्दसमूहः काव्यम्, इति विस्तारः प्रारब्धः। शब्दसमूहस्य मनोरमता च सुन्दररूपेण शब्दानां संग्रथनम् अर्थात् कुत्रचित् एकरूपाणाम्, एकस्थानिकानामक्षराणां विन्यासेन श्रवणयोः सुखोत्पादनम्, कुत्रचित्स्वरव्यञ्जनयोरेकाकारतया चमत्कारोत्पादनम्, क्वचित् आपाततः पदमेकमिव दृश्येत, किन्तु विचारे कृते अर्थभेदो भवेदिति विस्मयोत्पादनम्। क्वचिद् दीर्घसमासता, क्वचित् असमस्तानि पदानि पृथक् पृथक् संघटितानि भवेयुरित्यादि रूपेण पदानां गुम्फनस्य प्रकारोऽपि यत्र चमत्कारोत्पादकः स्यात्, इति पदरचनापि यत्र मनोरमा स्यात्। तथा च सौन्दर्यपूर्णस्य अर्थस्य सौन्दर्यपूर्णं वर्णनमेव लोकानामाकर्षकतया काव्यत्वेन स्वीकृतमभूत्। तथा च सारः सिध्यति यत् प्रारम्भे केवलं शब्दसमूहस्य काव्यता आसीत्। किन्तु अग्रे गत्वा-मनोरमस्य अर्थस्य मनोरमं वर्णनं काव्यमिति रूपेण .शब्दार्थयोरुभयोरेव काव्यत्वं प्राचलत्।

**रसगङ्गाधरस्य काव्यलक्षणम्**

एतावति समये काव्यग्रन्थानां लोकप्रियता सर्वत्र व्याप्ताऽभवत्। 'यस्य पदुगुम्फनस्य श्रवणे कृते हृदये आनन्दोद्बोधो भवेत् तादृशी शब्दसंघटना काव्यम्' इति सर्वतः प्रसिद्धिरभूत्। तथा च-चमत्कार-आह्लाद-आनन्द-हर्ष-

प्रमोदाद्यनेकपर्याय: प्रसन्नताविशेष: काव्यस्य जीवितस्थानीय: सर्वत: स्वीकृतोऽभवत्। अतएव प्राकृतभाषायामपि "उक्ति–विसेसो कव्वो भासा जा होइ सा होइ" इति प्रसिद्धमभूत्। तत एव च सर्वैरेव ऐकमत्येन निर्धारितम्–'काव्ये सारश्चमत्कार:' इति।

एवं काव्यस्य, तद्गतगुणानां च सर्वत: परिचयस्य प्रख्यातेश्चानन्तरं सर्वशास्त्रविषयकपाण्डित्यसंपन्नतया वस्तुत: 'पण्डितराज' पदार्हस्य जगन्नाथस्य समय: समुपतिष्ठति। पण्डितराजो जगन्नाथो मार्मिकस्तार्किक:, सुदृढो वैयाकरण:, तत्त्वविचारशाली दार्शनिकश्चासीत्। एतस्य समयात्पूर्वं साहित्यशास्त्रे ये ये काव्यविषयविचारका अभवंस्ते ते, तस्मिन् समये प्रचलितया सरल-सुबोधया शैल्या काव्यलक्षणं कृतवन्त:। अपरत:–साहित्यविषये पण्डितानां या या आलोचना: क्रमक्रमेण प्रवृत्ता आसन् ता: पण्डितराजस्य समये अतितमां मर्मस्पर्शिन्य: समभवन्। यतोहि यथा यथाऽस्मिन् विषये नानापण्डितानां नानाविधा मतय: प्रावर्तन्त तथा तथा अन्तस्तलस्पर्शिनी विचारणा प्रवृत्ताऽभूत्। पण्डितराजस्य च समय: सोऽभूद् यस्मिन् भारतीयपण्डितसमाजमध्ये नव्यन्यायस्य विजय: पूर्णतया समभवत्। समये तस्मिन् एकैकमप्यक्षरं तर्कस्य सुदृढतमां विचारणामनुभूय कस्मिंश्चिल्लक्षणे प्रविशति स्म। अत एव काव्यस्य लक्षणानि यानि पुरातनैरालंकारिकै: कृतानि, तेषु अतितमां मार्मिकविचारणाया: सोयमासीत्समय:।

किञ्च–पण्डितराजस्य योयं ग्रन्थ: साहित्यविषयकविचाराय प्रवृत्तस्तस्य नाम पण्डितराजेन निर्दिष्टं 'काव्यमीमांसा' इति। अस्यां हि काव्यसंबन्धिनां विषयाणामतिगभीरतमा आलोचना ग्रन्थकर्त्रा प्रतिज्ञाता। स हि भूमिकायां वदति यत्–मनन–समुद्रस्य गभीरतमे अन्तस्तले प्रविश्य अतित्मां क्लेशेन दुर्लभमणिसवृशोऽयं ग्रन्थो मया लोके आविर्भावित:। ततश्चास्मिन् ग्रन्थे काव्यविषयिणी प्रकामं मार्मिकी आलोचना कृताऽस्तीति सुस्पष्टम्। सेयमालोचना तर्कशास्त्रस्य प्रगाढं पाण्डित्यं पुरस्कृत्य प्रवृत्ता, इत्यपि स्पष्टमेव, विशिष्य न वक्तव्यं पण्डितपुरन्दराणां पुरत:। यतो हि स समयो नव्यन्यायस्य पूर्णप्रचारमयोऽभूद् भारतवर्षे।

अन्यशास्त्रीया: पण्डिता: साहित्यशास्त्रं सरलतमम्, नव्यन्यायस्य सुदृढ-विचारेण रहितमिति कृत्वा उपेक्षया तदेतदालोचयन्ति स्म। किन्तु

अलंकारशास्त्रस्य महत्त्वस्थापकः सोयं पण्डितराजो नैतामवहेलां सहते स्म। अत एवाऽनेन पण्डितराजेन तत्समये प्रगाढतया प्रसृतस्य नव्यन्यायस्य सरणिमवलम्ब्य काव्यमीमांसापरनामा सोयं ग्रन्थस्तादृशेन सन्नाहेन प्रणीतो यथा नाऽत्र साधारणपण्डितानाम् आलोचनाचञ्चोः प्रवेशस्याऽवकाशः। प्रोक्तं हि मया सरलाटीकायाः परिसमाप्तौ–

**पुरा प्रविश्याऽत्र निजप्रसङ्गादन्ये व्यजृम्भन्त बुधाः**
**कदाचित्।**
**अद्याऽनया पण्डितराजशक्त्या त्वसाधि**
**साहित्यमभेद्यदुर्गम्।।**

अतएव काव्यलक्षणेऽपि स्वसमये प्रगाढतया प्रसृतस्य नव्यन्यायस्य शैली परिगृहीता। तार्किका यथा एकैकं पदमतितमां विचारपूर्वकं विन्यस्यन्ति, तथा अत्र प्रत्येकं पदमतिमीमांसापूर्वकं स्थापितम्। यावती अत्र आकाङ्क्षाऽस्ति तदपेक्षया न न्यूनम्, नापि चाऽधिकं किञ्चित्पदं विन्यस्तम्। यावदेव संक्षेपो भवेत्तावदेव पाण्डित्यमपि महद् भवेत्, इत्यभूत्तस्मिन् समये स्पर्द्धा। नव्यन्यायेन प्रगुणितमतयो वैयाकरणा यथा–"अर्द्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते" इत्याहुस्तथा तामेव प्रत्येकाक्षरसंक्षेपवाहिनीं ग्रन्थनिर्माणशैलीमादाय प्रवृत्तः पण्डितराजः। अत एव अग्निपुराणमारभ्य पण्डितराजस्य समयं यावत् ये ये आलंकारिकाः काव्यलक्षणं प्रणीतवन्तः तानि सर्वाणि आलोचनाचक्रे संस्थाप्य पूर्णेन विवेकेन, अतीव मार्मिकतया च स्वं काव्यलक्षणं प्रणीतवान्, काव्यस्य कालिदासादिवत् कीर्तिः, अलौकिकः आनन्दः, स्वगुरोः, स्वाश्रयस्य राजादेः, स्वसेव्यस्य देवतादेः प्रसादनादीनि अनेकानि प्रयोजनानि सन्ति ईदृशस्य काव्यस्य तत्त्वबोधनं काव्यनिर्मातुः कवेः, तथा तदिदं काव्यं बुध्वा आनन्दप्राप्तेरिच्छुकस्य सहृदयस्य च आवश्यकमस्तीति तस्य लक्षणमाह पण्डितराजः "पूर्वेषां रीत्या तदिदं काव्यं गुणालंकारादिभिर्विशिष्टं भवति।" ततश्च गुणालंकारादिकानां विशेषणानां विशेष्यं तत् काव्यं किंस्वरूपमस्तीति बोधनाय पण्डितराजः काव्यलक्षणं निर्दिशति–**'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति।**

## पूर्वाचार्यकृतलक्षणानाम् आलोचना

दीर्घां भूमिकां विस्तृत्य मया पूर्वमिदमेव निवेदितमासीत्, यत् तस्मिन् समये प्रसृतां नव्यन्यायशैलीमाश्रित्य पूर्वेषामालंकारिकाणां विचारस्य निष्कर्षस्वरूपं स्वलक्षणं स्थापितं पण्डितराजेन। अग्निपुराणमारभ्य साहित्य-दर्पणकारं यावत् समेषां लक्षणकाराणां तात्पर्यमिदमासीद् "सौन्दर्यपूर्णस्याऽर्थस्य सौन्दर्यपूर्णं वर्णनं काव्यमस्ति" इति। तस्य सारतया पण्डितराजेन निर्दिष्टं यद् रमणीयस्य अर्थात् अलौकिकाह्लादजनकतया सौन्दर्यपूर्णस्य अर्थस्य प्रतिपादकः यः शब्दः [शब्दसमूहः, वाक्यम्, पदैः संदृब्धं वर्णनम्] स एव काव्यम्, इति। ततश्च "अभीष्टार्थस्य बोधिका पदावली काव्यम्" इति अग्निपुराणस्य। "इष्टार्थव्यवच्छिन्ना पदावली काव्यम्" इति दण्डिनः। "गुणालंकारसंस्कृतौ शब्दार्थौ काव्यम्" इति वामनस्य। "शब्दार्थशरीरं काव्यम्", इति आनन्दवर्धनाचार्यस्य। "सगुणौ निर्दोषौ शब्दार्थौ काव्यम्" इति मम्मटभट्टस्य। इति सर्वेषामेव पूर्वाचार्याणां लक्षणस्य तत्त्वमस्मिन् लक्षणे संनिविष्टम्। यतः अलौकिकानन्दजनकस्य अर्थस्य बोधको यः शब्दसमूहो भवेत् स हि अवश्यं सौन्दर्यपूर्णो भवेत्। शब्दे सौन्दर्यं च साहित्यपरिभाषितैर्गुणालंकारादिभिरेव भवति। ततश्च अलौकिकह्लादजनकत्वेन सौन्दर्यपूर्णो यः अर्थः, तादृशार्थस्य प्रतिपादकः, शब्दसमूहोपि गुणालंकारै-र्विशिष्टतया सौन्दर्यपूर्णः अवश्यं भवेदेव। एवं च "सौन्दर्यपूर्णस्य अर्थस्य सौन्दर्यपूर्णवर्णनं काव्यम्" इति प्राचीनाचार्यैर्यो लक्षणस्य सारः सूचितः, स ह्यस्मिन् लक्षणे स्पष्टतया समाविष्ट इति सुस्पष्टमेव भवेत्प्रतिभावताम्।

रमणीयार्थप्रतिपादकेत्यादिलक्षणस्य विशदा व्याख्या त्वेवम्। रमणीयो यः अर्थः, तस्य प्रतिपादकः (बोधकः) यः शब्दः [अर्थात् शब्दसमूहः, यतो ह्येकस्य शब्दस्य संज्ञा काव्यमिति न भवति] ततश्च तादृशः शब्दसमूहः काव्यम्। अर्थे रमणीयता च–लोके अननुभूयमानो य आनन्दः, तादृशानन्दस्य जनकं यज्ज्ञानं तादृशज्ञानाविषयता। ततश्च अलौकिकाह्लादजनकं यज्ज्ञानम् अर्थाद् भावना (अर्थस्य पुनः पनरनुसंधानम्) तादृशभावनाया विषयीभूतो योऽर्थः तस्य प्रतिपादकः (बोधकः) शब्दसमूहः काव्यमिति फलितम्। आह्लादे अलौकिकता विशेषणादानस्य प्रयोजनमस्ति यत्–'पुत्रस्ते जातः, अपारां धनसंपत्तिं ते दास्यामि' इत्यदिभिः शब्दैरपि आनन्दो भवति।

ततश्च इदमपि काव्यपदवाच्यं भवेत्। किन्तु सोयमानन्दो लौकिकः, अस्मदभीष्टया कविकल्पनया प्रसूतो नास्ति। एवं च लोकोत्तराह्लादजनकस्य ज्ञानस्य गोचरीभूतो योऽर्थः, तादृशार्थप्रतिपादकशब्दसमूहः काव्यमिति सर्वनिष्कृष्टं लक्षणम्। एतस्य विशदा व्याख्या–अलौकिकाह्लादापरनाम्नः चमत्कारस्य जनिका या भावना, तादृशभावनाविषयीभूतो योऽर्थः, तत्प्रतिपादकः शब्दसमूहः काव्यम्। अत्र शङ्का भवति। यत् एकः ईदृशः शब्दसमूहोऽस्ति यस्मिन् धारावाहिकरूपेण अर्थात् सामान्यप्रवाहरूपेण आह्लादजनिकाऽपि भावना अस्ति, तथा तद्विरुद्धा आह्लादस्य अजनिकाऽपि भावना अस्ति। ततश्च धारावाहिकरूपेण अयं शब्दसमूहः चमत्कारजनकभावनाविषयकस्य अर्थस्य प्रतिपादको जातः। अतः अस्यापि काव्यत्वं भवेत्। अतः एतस्या अतिव्याप्तेः निरासाय लक्षणस्य द्वितीयः प्रकारः पण्डितराजेन सूच्यते यत्–"यत्प्रतिपादितार्थविषयक–भावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वं काव्यत्वम्।" अर्थाद् येन यैर्वा शब्दैरुपस्थापितस्य [अर्थात् यादृशशब्दानुपूर्वी–प्रतिपादितस्य] अर्थस्य भावनया (पुनः पुनरनुसंधानेन) चेतसि चमत्कारजननं भवति, तादृशचमत्कारजनकताया अवच्छेदकं तादृशानुपूर्वीमत्त्वमेव काव्यत्वं भवति। अर्थात् यादृशीं शब्दानुपूर्वीं (शब्दपरम्पराम्) श्रुत्वा अलौकिक–चमत्कारजनिका भावना उद्भवति, तादृशानुपूर्वी–विशिष्टः शब्दसमूह एव काव्यं भवति। ततश्च यत्र संपूर्णतया आनुपूर्व्या चमत्कारजनिका भावना न भवति, किन्तु धारावाहिकरूपेण तद्भिन्ना अचमत्कारजनिका अपि भावना भवति तादृशस्थलस्य वारणं जातम्।

इदानीं नैयायिकशैल्या लघुभूतं काव्यलक्षणमाह–'स्वविशिष्टजनक–तावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वमेव काव्यत्वम्।' एतस्य साधारणभाषायामयं सारः। सर्वेषां चमत्कारणामवच्छेदकं (असाधारणधर्मः) यत् चमत्कारत्वम्, तद्विशिष्टत्वेव काव्यत्वम्। तत् चमत्कारत्ववत्वं च स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण बोध्यम्। यतो हि स्वं चमत्कारत्वं, तादृशचमत्कारत्वविशिष्टा विषयतासंबन्धावच्छिन्ना अर्थनिष्ठा या भावनानिष्ठजनकतावच्छेदकता, तद्रूपेण संसर्गेण, इत्याशयः। सर्वस्य लक्षणस्यायं निष्कर्षः–"यादृशशब्दानुपूर्व्याः (शब्दपरम्परायाः) पुनः पुनरनुसंधानात्मकेन भावनाविशेषेण चमत्कारापरपर्यायस्य अलौकिकानन्दस्य जननं भवति, तादृश–शब्दानुपूर्वीमत्त्वं काव्यत्वम्।

**लक्षणस्य मूलाक्षराणि–**

"रमणीयार्थप्रतिपादकः शब्दः (अर्थात् शब्दसमूहः) काव्यम्" इति न विस्मरणीयम्।

इदानीं मननसमुद्रे अन्तर्निमज्ज्य काव्यविषयिणी कीदृशी मीमांसा (अर्थात् मार्मिकता) पण्डितराजेन उद्भाविता, तस्याः परिचयो गृह्यताम्। प्राचीनैराचार्यैर्यानि काव्यलक्षणानि दर्शितानि, तेषु बहवो दोषाः सन्ति। प्रथमतस्तु-आलंकारिकशिरोमणिना श्रीमता मम्मटभट्टेन "शब्दार्थौ काव्यम्" इत्युक्त्वा शब्दश्च अर्थश्चेति द्वयोरेव काव्यत्वं लक्षणे प्रतिपादितं, तदेतन्न घटते। प्रमाणाभावात्। "काव्यं श्रुतम्, काव्यमुच्चैः पठ्यते, काव्यादर्थः अवगम्यते" इत्यादि व्यवहारः सर्वजनेषु प्रसिद्धः। सोयं व्यवहारः शब्दस्य काव्यत्वे एवं संगच्छते। यतोहि, श्रवणं शब्दस्य भवति। पठनमपि (व्यक्तवचनमपि) शब्दस्यैव भवेन्न अर्थस्य। 'काव्यात् अर्थः अवगम्यते' इत्युक्तौ काव्यं च अर्थश्चेति द्वयमपि पृथगिति प्रतीतिर्भवति। अन्यथा अर्थस्यापि काव्यत्वे 'अर्थात् अर्थः अवगम्यते' इत्यर्थबोधे असंगतिः प्रसज्येत्। ततश्च शब्दस्यैव काव्यत्वं वक्तव्यम्, न शब्दार्थयोः। (लक्षणया) शब्दमात्रे काव्यत्वव्यवहारो निर्वाहणीय इत्यपि न संभवति। यदि पूर्वं शब्दार्थयुगले काव्यशब्दव्यवहारस्य किञ्चित्प्रमाणं स्यात्तर्हि युगलमध्ये, एकस्य कृते लक्षणा भवेत्। किन्तु व्यवहारः शब्दे एव काव्यत्वस्य प्रवृत्तिं बोधयति, ततः कथं लक्षणायाः प्रसङ्गः?

ननु "शब्दार्थौ काव्यम्" इति प्रकाशकारेण स्वग्रन्थे प्रोक्तम्। अतएव मम्मटोक्तिः शब्दरूपा (सेयं) प्रमाणम्" इत्यपि न शक्यते वक्तुम्। यतो हि 'शब्दार्थौ काव्यम्' एतद्विचारे एव तु संशयः समापतितः। ततो विमतस्य आचार्यस्य वाक्येन निर्णयः कथं समुचितः स्यात्? एवमेव-उपरिप्रदर्शिता-भिरुपपत्तिभिः वेद-पुराणादीनामपि लक्षणं शब्दमात्रे एव विश्राम्यति अर्थाद् वेद-पुराणादीनां शब्दानुपूर्वी एव वेदः पुराणं चेति।

कतिपये 'आस्वादोद्बोधकत्वं काव्यत्वम्' इत्याहुः। अर्थात् आस्वादस्य रसस्य उद्बोधकम् [आत्मानन्दस्य जागरणकारकम्] काव्यपदवाच्यम्। एतदपि लक्षणं न संभवति। यतोहि आस्वादस्य रसस्य उद्बोधकाः वसन्त

हिन्दोलप्रभृतयो रागा अपि भवन्ति। स्वीकृतं चैतद् ध्वनिकारादिभिरपि। एवमेव नाट्यस्य अङ्गानि नृत्य-गीतवाद्यानि सर्वाण्येव रसस्योद्बोधकानि। ततश्च तान्यपि काव्यपदवाच्यानि भविष्यन्ति। तानि चमत्काराधायकानि किन्तु न काव्यानि। अतः शब्दे, अर्थे च काव्यत्वसंग्रहार्थं यत् 'आस्वादोद्बोधकत्वं' लक्षणं कैश्चित्कृतं तदपि परास्तम्। किञ्च-शब्दस्य अर्थस्य चेत्युभयोः काव्यत्वस्वीकारे-अयमपि प्रश्नः प्रोद्भवति यत् 'मिलितौ शब्दार्थौ काव्यम्,' अथवा 'शब्दः अर्थश्च पृथक् पृथक् काव्यम्'। यदि मिलितयोः शब्दार्थयोः काव्यत्वं, तर्हि श्लोकस्य वाक्यं (शब्दः) काव्यपदवाच्यं न भवेत्। यतो हि एकः एकः इति मिलित्वा द्वे भवतः। ततश्च द्वि-पर्याप्तं काव्यत्वम्, एकस्मिन् शब्दे अर्थे वा न संभवेत्। यदि तु प्रत्येकस्मिन् शब्दे अर्थे च पृथक् काव्यत्वं, तर्हि एकस्मिन् पद्ये शब्दस्य अर्थस्य पृथक्तया 'काव्यद्वयमिदम्' इति व्यवहारः प्रसज्येत। तस्मात् 'शब्दः काव्यम्'। न तु शब्दार्थौ। इति

शब्दार्थयोरुभयोरेव काव्यत्वसमर्थनाय नागेशभट्टमहोदयेनात्र प्रोक्तं यत् "यथा काव्यं श्रुतं, काव्यं पठितमिति लोके व्यवहारः, तथा 'काव्यं बुद्धम्' इत्यपि व्यवहारः। बोधश्च अर्थस्यैव भवति, नतु शब्दस्य। तस्मात् शब्दार्थयोरुभयोरेव काव्यत्वं स्वीकार्यम्। किञ्च वेद-पुराणादित्वमपि न केवलं शब्दमात्रस्य, अपि तु शब्दार्थयोर्द्वयोरेव। अतएव 'तदधीते तद्वेद' इति पाणिनि सूत्रस्य भाष्ये 'यः अधीते (पठति), यश्च 'वेद' जानाति, सोऽपि वैदिकः वैयाकरणो वा भवति। अर्थस्यापि काव्यत्वे द्वितीया आपत्तिः सेयम्, यत् द्वयोरपि काव्यत्वे, 'एको न द्वौ' इति बोधे, प्रत्येकस्य काव्यत्वं न स्यात् इति। अत्र लक्षणया प्रत्येकमपि काव्यत्वं भवेदिति, शब्दार्थयोर्द्वयोरपि काव्यत्वे न कोपि दोषः' इति।

एतदपि न किञ्चित्। "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इत्युक्तौ अर्थोपि शब्देन सह आगच्छति। अतस्तस्यापि बोधविषये अन्वयः संभवत्येव। ततश्च 'तदधीते तद्वेद' इत्यादौ अर्थस्यापि संग्रहस्य भाष्योक्तिः संगच्छत एव। किञ्च-शब्दार्थयोर्द्वयोरेव काव्यत्वं स्वीकृत्य-'लक्षणया प्रत्येकस्य काव्यत्वं भविष्यति' इति समाधानमपि परास्तम्। यतो हि "शब्दार्थयुगले काव्ये शब्दशक्तेर्दृढतरप्रमाणकाभावान्न लक्षणा" इति पूर्वमुक्तमेव। ततः कथं

लक्षणा? 'काव्यं बुद्धम्' इति व्यवहारस्तु इत्थं सङ्गच्छते यत्–शब्देन सह तत्सहकृतः अर्थोपि गौणतया समागच्छति। न किल काव्यरूपः शब्दः दुन्दुभिप्रभृतीनां शब्दवत् अव्यक्तो नादः। ततश्च प्रधानतया काव्यत्वं शब्दस्यैव तत्सहकृततया अर्थश्चापि संगृह्यते इति ग्रन्थाशयः।

लक्षणे हि मुखतः शब्द–निवेशेऽपि, शब्दस्य रमणीयार्थप्रतिपादकता-विशेषणदानात् स शब्दो रमणीयार्थसहितो गृह्यते। ततश्च शब्दस्य अर्थस्य चेति द्वयोरपि काव्यता स्वतः सिध्यति। लक्षणे शब्दस्यैव निवेशे कारणं तु–काव्ये निर्मितेः [अर्थाद् गुम्फनस्य] साक्षाद् विषयः सुललितसंनिवेश-विशेषशालितया माधुर्यादिबोधको विशिष्टः शब्द एव। शब्दस्य अर्थस्तु न कविना निर्मीयते। स तु अनादिप्रवाहात् ईश्वरेच्छारूपस्तस्य स्वाभाविक एव। ततश्च कालिदासेन निर्मितं रघुवंशमित्युक्तौ–'वागर्थाविव संपृक्तौ'–इत्याद्यारभ्य' राज्ञी राज्यं विधिवदशिषद् भर्तुरव्याहताज्ञा' इति पर्यन्तस्य पदगुम्फनस्य निर्माणम्। अर्थस्तु अनादिशक्त्या स्वयमुपतिष्ठत्येवेति मुखतो नोच्यते केनचित्। एवं स्थितौ 'रमणीयस्य अर्थस्य प्रतिपादकः शब्दः' इति कथने अर्थस्य संग्रहः स्वत एव सिध्यति। "शब्दार्थौ काव्यम्" इति अर्थस्य निवेशमकृत्वा लक्षणे केवलशब्दस्य स्थापनं तु तर्कपाण्डित्या-भिमानिनां कृते-तर्कपद्धत्या सुदृढ-संक्षिप्तलक्षणनिर्माणपाटवमेव। एवं च मननजलधेरन्तस्तलं प्रविष्टस्य पण्डितराजस्य लक्षणं किञ्चिन् मननं कृत्वैव बोधगम्यं भवेत्, न उपरितः परामर्शमात्रेण। तथा च शब्दः काव्यमित्युक्तावपि अर्थसहितः शब्दः काव्यकोटौ स्वयमुपतिष्ठति पण्डितराजस्य तात्पर्यम्। एवं किल प्रधानतया शब्दमेव निर्दिशतः परममार्मिकस्य पण्डितराजस्य निगूढं तात्पर्यमिदमस्ति यत्काव्ये शब्दसौष्ठवविषये विशेषतो यतनीयम् कविना। अर्थस्तु मधुरशब्दसंनिवेशे स्वयमुपस्थास्यत्येव यतो हि काव्यमिदं कान्तासंमितोपदेशः परिगण्यते। येषां विनेयानां प्रभुसंमितवेदादिषु सांमुख्यं न भवति, तेऽपि काव्यस्य मधुरतया आकृष्टाः सन्तो गुडजिह्विकया 'रामादिवद् वर्तितव्यं न रावणादिवत्' इत्यादिकमुपदेशं गृह्णीयुः। इदानीं द्रष्टव्यं यत् श्रोतृणां समाहरणार्थं कवेः काव्ये सर्वतः पूर्वं शब्द एव कर्णगोचरो भवति, न वा? ततश्च मधुरशब्दशय्यया अभिमुखीभूतः श्रोता काव्यं शृणोति तद्गतानुपदेशांश्च गृह्णातीति वस्तुस्थितिः। एवं च "विनेयानामभिमुखीकरणार्थं

कविसंरम्भगोचरस्य शब्दस्यैव प्राधान्यम्," इति सूचनाय लक्षणे 'शब्दः काव्यम्' इति पण्डितराजेन निबद्धम्।

किञ्च-अत्र काव्यानां प्रचारसूचकम् अन्यदपि ऐतिहासिकं रहस्यमस्ति। पण्डितराजस्य समयं यावत् काव्येषु भूयस्तमामुत्थान-पतनान्यभूवन्। पूर्वमलंकाराणां प्राधान्यमभ्युपगतं प्राचीनैर्भामहादिभिरालंकारिकैः। ततो ध्वनेराविर्भावः। ततो वस्तु-अलंकार-रस-इति त्रिविधानामपि ध्वनीनां काव्ये जीवितस्थानीयत्वं घोषितमभूत्। तदनन्तरं रसस्यैव आत्मत्वप्रख्यातिः। किन्तु प्रारम्भतः प्रभृति रसयुगपर्यन्तं सर्वस्याऽपि काव्यस्य मुखभागे शब्दस्य प्राधान्येन संनिवेशो न केनचिदालंकारिकेण प्रतिरुद्धः। यतो हि आपाततः काव्यस्य शब्दं श्रुत्वैव सहृदयाः समाकृष्टा भवन्ति। यदि सर्वतः प्रथमं कर्णयोरुपगते तस्मिन् शब्दे एव मनोहरता न भवेत्तर्हि वेद-धर्मशास्त्रादिभ्यो विमुखीभूय समागता विनेयाः कथमभिमुखीभूता भवेयुः? अतएव वेद-पुराणप्रभृतीनारभ्य सर्वस्मिन्नपि साहित्ये विशिष्टस्य शब्दस्यैव प्राधान्यं सुस्थिरमभूत्।

एतद्ग्रन्थनिर्मातुः पण्डितराजस्य साहित्यनिर्माणसमयः सोयमस्ति यस्मिन् मोगलसम्राजः शाहजहानस्याऽऽसीद् भारते शासनम्। पण्डितराजोऽपि "दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः", "दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान् पूरयितुं समर्थः' इत्यादिना तत्सामयिकीं परिस्थितिं सूचयामास। शाहजहानस्य समयं यावत् संस्कृतसाहित्यं तु पूर्णतया परिनिष्ठितमभूदेव, किन्तु हिन्दी पर्यायक-व्रजभाषासाहित्यमपि परमां प्रौढिं प्रापत्। तस्मिन्नेव समये 'सतसई' निर्माता बिहारी-कुलपतिमिश्रादयो व्रजभाषाकवयः स्वकीयेन कवितापाटवेन राजसंस्थानेषु असाधारणीं प्रतिष्ठां प्रापुः। संस्कृत-भाषायाः साम्राज्यसूर्यः तस्मिन् समये पूर्णं मध्याह्नमनुभूय अवतरणोन्मुख इवाऽभवत्। व्रजभाषासाहित्यं च जनानामनुरागभाजनमभूत्। तत्सामयिकाः सहृदयाः, कवीनामाश्रयदातारो राजानश्च व्रजभाषाकाव्यैरेव प्रसन्ना अभूवन्। व्रजभाषानिबद्धेषु तेषु काव्येषु च अर्थस्य चमत्कारे सत्यपि आपाततः शब्दानामेव सौन्दर्यं सहृदयानाचकर्ष। यथा विहारिणो दोहापद्यम्-"नभ लाली चाली निसा चटकाली धुनि कीन। रति पाली आली अनत आये वनमाली न।।" "रे गायन! गायन चतुर ये गायन

परवीन। ये गाहक करवीन के, लै बैठयो कर बीन।" यथा वा, तदुत्तरभावी भारतसुप्रसिद्धः पद्माकरः–

**कूलनमें केलि में कछारन में, कुञ्जन में,**
**क्यारिन में कलित कलीन किलकन्त है।**
**कहै 'पदमाकर' परागन में पौन हू मैं**
**पातन में पिक में पलासन पगंत है।**
**द्वार में दिसान में दुनी में देस देसन में**
**देखो दीप दीपन में दिपत दिगन्त है।**
**वीथिन में व्रज में नवेलिन में बेलिन में**
**बनन में बागन में बगर्यो बसन्त है।।१।।**

मननजलधेरन्तस्तलं प्रविश्य तत्त्वसमाहरणपण्डितः पण्डितराजः साहित्यस्य सर्वां प्रगतिं पूर्वाऽपरतः सम्यक् समीक्षांचक्रे। शब्दसौष्ठवं प्रति सहृदयानां स्वभाविकमनुरागं नासौ अपलपितुं समर्थो बभूव। प्रत्यक्षमयमनुभूतवान्–यत् काव्यं श्रृण्वन् सहृदयः पूर्वं शब्दसौन्दर्येणैवाकृष्टो भवति। पूर्वेऽपि कवयः शब्दमाधुर्यं परम्परातः प्राशंसन्।

**अविदितगुणाऽपि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।**
**अनधिगतपरिमलापि हि हरति दृशं मालतीमाला।।१।।**

ततश्च सर्वशास्त्रेषु प्रगाढपण्डितस्य, तथा काव्यरचनायामपि दिगन्तविश्रान्तकीर्तेः पण्डितराजस्य काव्यरचनासमये शब्दसौष्ठवं प्रति यदि समाकृष्टं भवेन्मानसं तर्हि नेदमाश्चर्यम्। यतो हि–अर्थचमत्कारं पूर्णतया प्रकटयन्नपि सोयं निजपद्येषु यं कंचित् शब्दचमत्कारमवश्यं दर्शयामास। एतस्य शिखरिणीछन्दस्तु प्रसिद्धमेव–

**'यदन्तः खेलन्तो बहुलतरसन्तोषभरिता**
**न काका नाकाधीश्वरनगरसाकाङ्क्षमनसः।**

**निवासाल्लोकानां जनिमरणशोकापहरणं**
**तदेतत्ते तीरं श्रमशमनधीरं भवतु नः।।१।।**

विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं
न याभ्यामालीढा नयनरमणीया तव तनुः।

अयं हि न्यक्कारो जननि मनुजस्य श्रवणयो-
र्ययोर्नान्तर्यातस्तव लहरिलीलाकलकलः।।२।।

किन्तु अन्यान्यपि पद्यानि शब्दसौन्दर्ययुक्तान्येव भवन्ति। यथा हि मालभारिणी-

नितरां हितयाऽद्य निद्रया मे
बत यामे चरमे निवेदितायाः।
सुदृशो वचनं श्रृणोमि
यावन्मयि तावत्प्रचुकोप वारिवाहः।।१।।

कुसुमानि शरा, मृणालजालान्यपि
कालायसकर्कशान्यभूवन्।
सुदृशो दहनायते स्म राका,
भवनाऽऽकाशमथाऽभवत्पयोधिः।।२।।

शार्दूलविक्रीडितम्-

वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावली-ताण्डव-
भ्रश्यत्-खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत्।।

उपजातिः-

तीरे तरुण्या वदनं सहासं नीरे सरोजं च मिलद्विकासम्।
आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धालिकिशोरमाला।।

अवश्यमाकाङ्क्षितकृष्णवर्त्मा भीष्मो महात्माऽजनि
माघतुल्यः।।

अनुष्टुप्०-गुञ्जापुञ्जधरः पायादपायादिह कोऽपि वः।।

किं बहुना। पण्डितराजस्य कविताप्रवाहे तत्समयप्रचलितः शब्दप्रवाह एव केवलं नाऽऽगच्छत्। कुत्रचित्कुत्रचित् अर्थोऽपि व्रजभाषासाहित्यमनुहरते। यथा विहारिणः पद्यम्-

**छिप्यौ छबीलो मुख लसै नीले आँचल चीर।**
**मनौ कलानिधि झलमलै कालिन्दी के नीर।।**

पण्डितराजस्य गङ्गाधरे पद्यमस्ति–

**नीलाञ्चलेन संवृतमाननमाभाति हरिणनयनायाः।**
**प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः।।**

एतद्धि विहारि–पद्येन अविकलं संवदते। अन्यकवीनां रचनागन्धं मनसाऽपि परिहरन्, नितान्तमभिमानशाली पण्डितराजः तत्सामयिकस्य भाषाकवेः पद्यच्छायाम् इच्छया अनुचकार, अथवा सामयिकः प्रभावो यदृच्छयाऽस्य रचनायामागच्छत्? इति अन्वेषणशीलाः पण्डितमहाभागा एव गवेषयन्तु। किन्तु सामयिको युगप्रवाहः सर्वथाऽनुल्लङ्घनीयो भवतीत्येव कथनस्य तात्पर्यम्। ततश्च प्रारम्भतोऽद्यावधि सर्वामपि साहित्यस्य परिसीमां दृष्टवान् मार्मिकः पण्डितराजो मननसमुद्रे निमज्ज्य रसगङ्गाधरनाम्नीमिमां काव्यमीमांसां विरचयामास। अतएव काव्यलक्षणे अर्थस्य समावेशार्थं पण्डितराजेन विचारो न कृतः स्यात्, इति को वा विचारशीलो वक्तुं पारयेत्। किन्तु तार्किकंमन्यानां संक्षिप्त–सुदृढ–लक्षणनिर्माणगर्वं खर्वं कुर्वन् सुदृढ–संक्षिप्तं लक्षणं निबबन्ध–"रमणीयार्थ–प्रतिपादकः शब्दः काव्यम्" इति।

यत्किञ्चित्काव्यं शब्दतः श्रृण्वतां पाठकमहाभागानाम् अर्थचमत्कारस्तु परस्तादनुभवगम्यो भवेदेव, किन्तु कर्णाभ्यां श्रुतमात्रैव सुन्दरशब्दशय्या सहृदयानाकर्षतीति वर्णिका (बानगी) रूपेण नवीनानि पद्यानि कानिचित् संमुखमुपस्थापयामि। एवंविधरचनाविषये काश्यादिषु सुप्रसिद्धेषु संस्कृतसाहित्यकेन्द्रेषु काव्यगतसौष्ठवविषयमवलम्ब्य पूर्णो विमर्शः समभूत्। विचारोत्तरं रचनामार्मिकैरनुगृहीता सेयं रचना प्रमोदप्रकटनरूपपुरस्कारेण। अस्तु, कविता सेयम्–

**मूर्द्धनि मनोज्ञमणिमञ्जुलमुकुटधारी**
**कुन्तलकलापमनोहारी मुखपद्धतौ**
**चञ्चलानुकारी कटिदेशे भाति पीतपटो**
**मोदमुपयाति गोपनारीजनसंहतौ।**

मञ्जुनाथ दारुणदवौघपरिहारी सतां
भक्तजनमानसविहारी साधुसंगतौ
मनसि मुनीनामपि मन्दमन्दचारी चिरात्
सोयं सुखकारी मे मुरारी रमतां मतौ।।

भूरुहा वहन्ते मञ्जुमञ्जरीर्भजन्ते चारु
वल्लरीर्मदन्ते मधुपायिनोऽद्य मानसे।
झम्पामारभन्ते मञ्जुपम्पापुलिनान्तेचराः
सुभगसमीराः संजुषन्ते रसिका रसे।।

काकलीः श्रयन्ते युवकोकिला विलासभृतो
बाणाः संरभन्ते कुसमेषोरपि नीरसे।
प्रणतिरियं ते वच्मि भूयः कान्त किं ते
ननु विरहिदुरन्ते किं वसन्ते गन्तुमीहसे।।

मानवसमाजे सभ्यतायाः साधयित्री सेय-
ममितमगाध–ज्ञानराशिजनयित्रीयम्।
विश्वमण्डलेऽस्मिन्नखिलेऽपि प्रभवित्री बभौ
भरत-भगीरथादिभूपोद्‌भावयित्रीयम्।।

श्रीमद्राम-कृष्ण-पदपङ्कजैः पवित्रीकृता
भीष्मप्रमुखानां धर्मधीराणां सवित्रीयम्।
वीराणां वरित्री चिन्तनीयचरितानां चारु
चेतसि चरित्री भाति भारतधरित्रीयम्।।

एवं च-अर्थचमत्कारे पूर्णतया सत्यपि पदगुम्फने सुललित–शब्दसौन्दर्य-बलादेव काव्यं सहृदयानां हृदयामकर्षतीति सर्वसंमत्या सिद्धो निष्कर्षः। एतां सर्वां साहित्यपरिस्थितिम् असाधारणेन मननेन सुदृढीकुर्वन् पण्डितराजः स्वीये काव्यलक्षणे रमणीयमर्थं प्रथमत एव निर्दिशन्नपि तर्कपाण्डित्यप्रकटनाय सुदृढ-संक्षिप्तं लक्षणं निबबन्ध–'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति।

एतद्विरुद्धं 'शब्दार्थौ काव्यम्' इति यत् प्राचीनानां काव्यलक्षणमासीत्, तस्य समर्थनं स्वर्गवासिभिः काशीस्थैर्महामहोपाध्याय पं. श्री गङ्गाधरशास्त्रि-

महाभागैरक्रियत। प्रोक्तं च तैर्यत् "शब्दमात्रस्य काव्यत्वे तु शब्दमात्रगतानां दोषगुणालंकारध्वनीनां निरूपणौचित्येन, अर्थगतानां तेषां निरूपणस्य उन्मत्त प्रलापत्वापत्तिः" इत्यादि।

एवमेव 'हिन्दी रसगङ्गाधर' नाम्ना रसगङ्गाधरस्य हिन्दी-टीकां कुर्वद्भिश्चतुर्वेदमहाभागैः "शब्दः काव्यम्" इति पण्डितराजस्य काव्यलक्षणं समालोचितम्। प्रोक्तं च यत्-"मम विचारे अलौकिकाह्लादजनकयोः शब्दार्थयोरेव काव्यत्वं युज्यते, न केवलस्य शब्दस्य। अन्यथा दृश्यकाव्यभेदकरणमप्यसंगतं स्यात्। यतो हि दर्शने अर्था एव आगच्छन्ति, न शब्दाः। एवमेव अर्थालंकार- निरूपणमपि तदैव सार्थकं स्यात्। अन्यथा शब्दमात्रस्यैव काव्यत्वे अर्थालंकाराणां साहित्ये निरूपणं व्यर्थं स्यात्।" इत्यादि।

किन्तु-अत्र मार्मिकविचारस्याऽऽवश्यता। पण्डितराजस्य लक्षणमस्ति 'रमणीयस्य अर्थस्य प्रतिपादको यः शब्दः, (स काव्यम्) तत्काव्यम्।' ततश्च काव्यत्वेन स्वीकृतो यः शब्दः, शब्दसमूहो वा भवेत्तेन सह अर्थोऽप्यवश्यमागच्छति न हि सोयं शब्दो ढक्का-मृदङ्गादिशब्दवत् अव्यक्तः (अनर्थकः)। ततश्च- 'अलौकिकाह्लादजनकस्य अर्थस्य, शब्दस्य च काव्यत्वम्,' इति। ततश्च प्रतिपक्षिभिरुद्भाविताः दृश्यकाव्य-अर्थालंकार-विषयका दोषाः कथमपिं न प्रसज्ज्यन्ते। इदं हि स्थूलतममस्ति। यतो हि विश्वनाथकृतस्य काव्यलक्षणस्य खण्डनं कुर्वता स्वयमेव प्रोक्तं पण्डितराजेन यत् 'वस्तु-अलंकार-प्रधानानां काव्यानामकाव्यत्वं स्यात्' इति। 'मननसागरे निमज्ज्य रसगङ्गाधरनामा मणिर्मया लोके उद्भावितः' इति विचारसागरस्य तलस्पर्शाभिमानी पण्डितराजः सुस्पष्टं दृश्यमानामिमामापत्तिं न कथंचित्पश्येदिति किं सुसंभवम्?

ततश्च यदा 'शब्दार्थौ काव्यम्' इति संमतं, तदा 'शब्दः काव्यम्' इति कथनस्य इदमेव तात्पर्यं यत्पण्डितराजो नवीनन्यायस्य धुरन्धरान् सूचयति यत् भवन्तः अतिसंक्षेपेण भूयसः अर्थस्य [अव्याप्ति-अतिव्याप्ति-रहितम्] संग्राहकं लक्षणं परमोत्तममिति साभिमानं मन्यन्ते। इदानीं 'रमणीयार्थ-प्रतिपादकः शब्दः काव्यम्' इति मम लक्षणे 'रमणीयार्थ-प्रतिपादकतोक्त्या' अर्थस्याऽपि संग्रहः स्वतो भवत्येव। ततश्च भवत्स्वीकृत-संक्षेपपद्धत्या

'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इत्युक्तावपि अर्थसहितस्य शब्दस्य काव्यत्वं सिध्यत्येव। किं मुधा शब्दाडम्बर-वर्धनेन? एवं च तर्क-व्याकरण-फक्किकापण्डितानां प्रातिद्वन्द्व्य-दर्शनार्थमेव तथा संक्षिप्तं लक्षणं 'रमणीयार्थ-प्रतिपादकः शब्दः काव्यमिति' स्थापितं पण्डितराजेन।

मुखतः शब्दमेव निर्दिशतः पण्डितराजस्य तात्पर्यं काव्ये शब्दस्यैव प्राधान्यं, कविसंरम्भगोचरत्वं चेति स्थापनपरमासीदिति पूर्वं सूचितवानेवाऽस्मि। न त्वनेन विनिगमनीयं यत्पण्डितराजः शब्दमात्रप्राधान्यवादी। वस्तुतो रमणीयता-पदार्थं विवृण्वता तेन यद् व्याख्यातं तद् व्यापकतया काव्यास्वादप्रक्रियां विशदीकरोति। रमणीयतया लोकोत्तरमाह्लादं जनयतो ज्ञानस्यानुभवो भवति। किं च तल्लोकोत्तरत्वम्? चमत्कारस्यानुभवः। येन पुनः पुनस्तत्र 'प्रवृत्तिः स्यादित्यादिना' विवेचनेनेदंप्रथमतया मानसीं प्रक्रियां प्रकटीकुर्वाणेन पंडितराजेन सारभूतं काव्यसौन्दर्यास्वाद-व्याख्यानं प्रतिपिपादयिषितं येन सार्वदैशिकः सार्वकालिकश्च काव्यस्वादव्याख्या-विमर्शः संपद्यते, पाश्चात्यानां, पारसीकानां वा काव्यानामपि, संगीतादीनां कलानामपीति दरमुकुलितनयनं विदांकुर्वन्तु सहृदयाः।

# कवि-कवित्वविमर्शको निबन्धः
# काश्मीरकमहाकविर्बिह्लणस्तत्काव्यं च

भारतीयं काव्यसाहित्यमखण्डेपि भूखण्डे सर्वतोऽपि विश्रुतं नूनम्। वेदोपनिषद्दर्शनाद्यार्षविज्ञानैरुन्मीलितलोचनाः पारेसमुद्रवासिनो वैदेशिका अपि यथा प्रणमन्ति प्राच्यविपश्चितस्तथा सकलसहृदयानामन्तःकरणं वशीकुर्वद्भिः संस्कृतकाव्यैरपि विस्मापितमखिलं विवेकिजगत्। महाकविकालिदासादेः शाकुन्तल-रघुवंशादिकं भक्तिगद्गदं स्तुवद्भिः पाश्चात्यविपश्चिद्भिर्डिण्डिमघोषमाघोषितो भारतीयमहिमेति कस्य वा न विदितम्? वशीकृतवाणीनां पुराकवीनां बहूनि किल काव्यरत्नानि साम्प्रतमप्यविदितानि किन्तु चिराद्वैदेशिकशासनविदलितेऽस्मिन् भारते सम्प्रति दुष्प्रापाणि तानि नूनम्। सुप्रसिद्धैः पञ्चकाव्यैरेव व्युत्पन्नाः प्राच्यपण्डिताः शनैः शनैर्गवेषणया आविष्कृतानां मयूर-साहसाङ्क-भर्तृमेण्ठ-क्षेमेन्द्र-राजशेखर-भासादि काव्यानामपि रुचिरं रसज्ञाः समभवन् इति क्रमशः समुपलब्धां भारतीय-काव्य-समृद्धिं को वा नानुमिनुयात्?

सोयं काश्मीरश्चिराद्विद्यापीठमार्यावर्तेऽस्मिन्। अत्रैवाविष्कृतैर्नानातन्त्रागमैरुद्भासितं भारतीयं पण्डितजगत्। इहैवाऽनुपमगिरस्ते कवयः समभवन् ये कुङ्कुमकेसराणामिव कविताविलासानामप्येकमात्रं काश्मीरमेव प्ररोहस्थानमभिमन्वते। तेषां भर्तृमेण्ठ-भल्लट-मयूराद्याः प्रथमाः, बिह्लणाभिनन्दक्षेमेन्द्रपरिमलगुप्तादयो मध्यकालिकाः, मङ्ख-जह्लण-जगद्धरादयोऽवरकालिकाः प्रसिध्यन्ति। तेष्वयं वेदे व्याकरणेऽलंकारशास्त्रे च विशेषाभिमानशाली श्रीमान् बिह्लणः प्रमुखतां धत्ते यं हि कर्णाटकराजधान्याः कल्याणनगर्याः स्वामी पर्माडिभूपतिर्विक्रमाङ्को 'विद्यापति' बिरुदेनालंचक्रे। आह बिह्लणः-

**"साङ्गो वेदः फणिपतिदृशा शब्दशास्त्रे विचारः**
**प्राणा यस्य श्रवणसुभगा सा च साहित्य-विद्या।**

को वा शक्तः परिगणयितुं श्रूयतां तत्त्वमेतत्
प्रज्ञाऽऽदर्शे किमिव विमले नास्य संक्रान्तमासीत्।।"
[ १८/८२ ]

'चक्रं यस्याऽक्रियत वदनप्रेक्षि विद्यावधूनां
श्रीवाग्देव्याश्चरणरजसा कार्मणत्वं गतेन।

याताः सार्द्धं दिशि दिशि पुनर्बन्धुराः सर्गबन्धाः
कीर्तेः पारिप्लवविदलने सौविदल्ला बभूवुः।।'
[ १८/८३ ]

## विह्लणस्यात्मपरिचयः

प्राकृतशोभाप्रवीरस्य काश्मीरस्य सहजसुषमाधरेषु नगरेषु 'प्रवरपुरं' सर्वप्रधानम् यद्धि वितस्तासिन्ध्वोः संगमे समधिविष्टम्। एतद्धि न केवलं लौकिकनगरातिशाय्येव, अपि तु अलका-लङ्काऽमरावतीभ्योऽपि पराजयप्रदम्। पवित्रं तत्पुरं विद्वद्भिर्ब्राह्मणैरलंकृतम्। न तत्र कदाचिदुष्णता बाधते। तत्र हि भट्टारकमठ-संग्रामकक्षेत्रमठ-क्षेमगौरीश्वरमन्दिराणि जगति दर्शनीयानि।

प्रवरपुरस्य सार्द्धक्रोशद्वयान्तरे जयवनं नाम प्रदेशः। तस्यैव निकटे खोनमुखो[१] ग्रामः, यत्र हि कुङ्कुमस्य मृद्वीकानां चाधिक्येनोत्पत्तिः। तत्र कौशिकगोत्रीय ब्राह्मणानां निवासः। तस्मिन्वंशे महाप्रभावो मुक्तिकलशो नाम विप्रमणिः। तत्पुत्रो राजकलशः। ततूसुतो ज्येष्ठकलशो यो हि साहित्यस्य जन्मभूः, शब्दशास्त्रस्याचार्यो महाभाष्यस्य प्रणिनाय व्याख्यामेकाम्।[२] तस्मान्नागादेव्यां विह्लणः सोयमजनि।[३] साङ्गं वेदम्, विशेषतश्च साङ्गं व्याकरणं, संपूर्णं साहित्यशास्त्रं चायत्तीकृत्य सोयं दिग्विदिक्षु प्रथितयशाः समभूत्।

काश्मीरेषु सर्वतः स्वयशः प्रसार्य प्रायासीदसौ विदेशान्। पाञ्चालेषु किञ्चिदध्युष्य तत्काले वैदुष्याय प्रथितां मथुरां प्रययौ यत्र निर्जिगाय

---

१. 'यस्यास्ति सोनमुख इत्युपकण्ठसीम्नि ग्रामः' [स.१८श्लो. ७१]

२. सेयं व्याख्या गवेषकैर्नाधिगताद्यावधि

३.

निखिलान्पण्डितान्। ततो वृन्दावने न्यवात्सीत्कञ्चित्कालम्। तत्राधिवसत एवास्य परितोपि दूरदूरप्रान्तेषु एतद्रचिता कविता लोकप्रियासीत्। आबालवृद्ध-वनितास्तस्य कवितां प्रणयतः पेठुः प्रमोदे चाऽमाद्यन्। इत इव तस्य कीर्तिरगच्छत्कान्यकुब्जानपि। प्रभूतं द्रव्यमुपार्ज्यापि सर्वस्वं तत्प्रयागे प्रददौ भूसुरेभ्यः।

ततः स काशीमुपगत्य दुःशील-नरपतीनां मुखालोकोद्भवं दुरितं देवतटिन्यामक्षालयत्। तत्र कालिञ्जरविजेत्रा दाहलाधीशेन कर्णेनाऽसौ समगच्छत। एतस्य कवितामृतमास्वाद्य निर्ववौ दाहलनरेशः। तस्याऽऽस्थानपण्डितं प्रसिद्धकविं गङ्गाधरमसौ मध्येसभं पराजिग्ये/ततो वाग-मृतेनायोध्यां शीतलीकृत्य गुर्जरान्प्रययौ/मार्गमध्ये स भोजस्य राजधानीं धारां कार्यवशात्परिजहार/एष हि गुर्जरभूनिर्जरैर्न मनागपि तुतोष। आह स्म सः–

**'कक्षाबन्धं विदधति न ये सर्वदैवाविशुद्धा-**
**सद्भाषन्ते किमपि भजते यज्जुगुप्तास्पदत्वम्।**
**तेषां मार्गे परिचयवशादर्जितं गुर्जराणां**
**यः संतापं शिथिलमकरोत्सोमनाथं विलोक्य।।'**
[ १८/९-७ ]

अनेकनरपालानां समागमलालसया प्रययौ स दक्षिणापथं रामेश्वरावधि। लघून्नरपालान् दृक्पातेनाऽप्यनभिनन्दन्, प्रवरनरपालानामास्थानं च निजवैदुष्ये-नाभिमण्डयन्नसौ चालुक्यवंशीयस्य विक्रमाङ्कदेवस्य सभामुपययौ। गुणवशी-भूतोसौ सर्वतोऽधिकं संमानयामास तमिमम्। अलंचकार चासौ 'विद्यापति' पदकेनाऽमुम्। स हि कर्णाटकपुरन्दरस्य विक्रमाङ्कदेवस्योपहाराय निर्ममौ तदिदं चरितकाव्यम्। देशदेशान्तरेभ्यो लब्धकीर्तिरधिगत-प्रभूतसंपत्तिरपि सस्मार जन्मभूमिम्। स्वयमयमात्ममुखेनाह–

**'लब्धा कीर्तिर्दिशि दिशि कृताः संपदः साधुभोग्याः**
**प्राप्ता योग्यैः सह कलहतः कुत्र नोच्चैर्जयश्रीः।**
**गोष्ठीबन्धः सपदि सुजनैः सारनिष्कर्षदक्ष-**
**प्रज्ञालब्धस्तुतिभिरचिरादस्तु काश्मीरकैर्मे।।' [ १८-१०३ ]**

सर्वथा सर्वत्र लब्धसाफल्योऽप्यन्ते भजति भागीरथीमन्तरात्मना–

**'आरुक्षाम नृपप्रसादकणिकानद्राक्ष्म लक्ष्मीलवा-**
**न्किञ्चिद्वाङ्मयमध्यगीष्महि गुणैः कांश्चित्पराजेष्महि।**
**इत्यज्ञानमयीमकार्ष्म कियतीं नानर्थकन्थां मनः**
**स्वाधीनीकृतशुद्धबोधमधुना वाञ्छत्यमर्त्यापगाम्।।'**
**[ १८/१-४ ]**

कर्णभूपालस्य राजधानीं दाहिलनाम्ना निरदिक्षद्बिह्लणः। बहवः किल चेदि अथवा चंचरीत्यस्यैव दाहलेत्युपनाम जगुः। यत्किञ्चित्स्यात् किन्तु दाहलमिदं बुन्देलखण्डान्तर्गतं किञ्जित् प्रान्तसंस्थानमिति प्रतीमः। यतो हि राज्ञः (कर्णस्य) कालिञ्जरविजेतृत्वमयं वर्णयामास। तदिदं प्राप्यतेऽत्रत्येतिवृत्तेषु। कालिञ्जरं 'बाँदा' निकटवर्ति, यत्रत्यं प्राचीनदुर्गमद्यापि वर्तमानम्। नासीद्दाहलाद् धारा दूरे, किन्तु भोजप्रख्यातिं शृण्वन्नपि नायं तत्र ययौ/प्राचीनशिलालेखैरवगतं यत् अनहिलवाडस्य राज्ञा भीमदेवेन (प्रथमेन), कर्णेन चानेन संभूय भोजोपर्यकारि पुराऽऽक्रमणम्। अतएव कर्णस्य भोजस्य च मिथो वैमनस्यं विचार्यैव बिह्लणोयं न गतः स्याद्धारानगरीम्। रामेश्वरावधि दक्षिणापथे भ्रान्त्वा परावृत्तः सोयं कल्याणनगर्यां विक्रमाङ्कस्याश्रयमाययौ यत्र वृद्धावस्थापर्यन्तमविच्छिन्नं न्युवास। अत एव हि विक्रमाङ्कचरितस्यान्तिम-सर्गे गङ्गातटोपरि निवासहेवाकमसौ प्राचीकटत्। अनेन चेदमप्यनुमीयते यद्बिह्लणो वार्द्धक्य एव विक्रमाङ्कचरितं विरचितवान्।

विक्रमाङ्कस्योपनाम 'विक्रमादित्यः'। एष कल्याणनगर्यां ख्रि.सं. १०७६ तममारस्य ११२७ पर्यन्तं राज्यमधिशशास। काश्मीरेषु राज्ञोऽनन्तस्य, कलशस्य, हर्षस्य च वर्णनेन प्रमाणितं भवति यत् एकादशशताब्द्या उत्तरार्द्धे पर्यटितवान् बिह्लणोयं नानादेशान्। यत्र किल बिह्लणो वर्णितवाननन्तदेवं तत्र भूतकालिकप्रयोगेणानुमीयते यस्मिन् समये काव्यमिदं व्यरच्यत तस्मिन् समये नासीदनन्तदेवः। यथा हि–

**'सत्यत्यागप्रमुखनिखिलोत्कर्षसंपत्तिसीमा**
**तस्मिन्नासीदवनि-वनिता-वल्लभोऽनन्तदेवः।**
**वेरिस्तम्बेरमधनघटागर्जितानामगम्ये**
**चक्रे धारापयसि यदसेः कीर्तिहंसी निवासम्।।'**
**[ १८/३३ ]**

राजतरङ्गिणीतः प्रतीयते यद् अनन्तदेवः पञ्चविंशतिवर्षाणि राज्यं प्रशास्याऽन्ते निजपुत्रं कलशं न्यवीविशत्सिंहासने, किन्तु पञ्चदशवर्षाणि स्वयं राज्यप्रबन्धं निरैक्षत। अन्ते पुत्रस्य दुःशीलतया दुःखितो विससर्ज स्वयमात्मना ऽऽत्मानम्। जनरल कनिहांम (कनिंधम) स्यानुसारमनन्तः १०२८ तमे ख्रिष्टाब्दे सिंहासनमध्यारुरोह, १०८० तमे च दिवमारुरोह। अतएव 'आसीदवनिवानतावल्लभोऽ नन्तदेवः' इति भूतकालिकप्रयोगेण १०८० तम ख्रिष्टाब्दादनन्तरं विक्रमाङ्कचरितरचना सुस्थिरा भवति। एकमन्यदपि प्रमाणमस्ति। यदीतः पूर्वं काव्यमिदं निरमास्यत तर्हि १०८८ तमख्रिष्टाब्दे जाताया विक्रमाङ्कस्यास्य मध्यभारतोपरि विजययात्राया अपि वर्णनमत्राऽ-भविष्यत्। किन्तु नेयं युद्धयात्रा वर्णिता काव्येस्मिन्। प्रभावशालिनी सेयं यात्रा 'एशियाटिक सोसाइटी' द्वारा प्रकाश्यस्य पत्रस्य चतुर्थभागे प्रत्ताऽस्ति। अत एव १०८८ तमख्रिष्टाब्दापूर्वम्, १०८० तमवत्सराच्चानन्तरं विक्रमाङ्कचरितमिदं व्यरच्यतेति सुस्थिरं भवति।

किञ्च राजतरङ्गिण्यां कलशनरेशस्य काले बिह्लणस्य काश्मीरेभ्यो निर्याणं हर्षदेवस्य समये च पुनः परावर्तनं वर्णितम्, यथा–

**'काश्मीरेभ्यो विनिर्यान्तं राज्ये कलशभूपतेः।**
**विद्यापतिं यं कर्णाटश्चक्रे पर्माडिभूपतिः।। ९३६**

**प्रसर्पतः करटिभिः कर्णाटकटकान्तरे।**
**राज्ञोऽग्रे ददृशे तुङ्गं यस्यैवातपवारणम्।। ९३७**

**त्यागिनं हर्षदेवं स श्रुत्वा सुकविबान्धवम्।**
**बिह्लणो वयञ्चनां मेने विभूतिं तावतीमपि।। ९३९'**

कल्याणस्य त्रिभुवनमल्लोयं विक्रमादित्य एव 'पर्माडि' नामा। ततश्च यस्मिन्समये कलशो नाममात्रार्थं राजासीद् राज्यप्रबन्धं च स्वयमनन्तदेवो निरीक्षते स्म तस्मिन् समये (१०६२ तमख्रिष्टाब्दादनन्तरम्) बिह्लणः काश्मीरभ्यो विनिर्ययौ/एतदनन्तरं विंशति-पञ्चविंशति-वर्षाणामन्तराले नानादेशेषु भ्रान्त्वा, कल्याणे निर्भरं न्युष्य, पुनः परावव‍ृते काश्मीरान् बिह्लणः।

ततश्च कलशराज्यकालादनन्तरम् अनुमानतः

१०६५ तमखिष्ट वत्सरस्याऽऽसन्नमयं काश्मीरान् विजहौ, प्रौढवयःप्राप्तौ अनुमानतः १०८५ तम वत्सरस्य संनिधौ च सोयं विक्रमाङ्कचरितं प्रणिन्ये। काव्यस्यान्तिमसर्गे सकल-सांसारिकसुख-भोगोत्तरं संप्रति गङ्गातट-निवासलालसस्य वार्द्धक्यं न चेदथापि कवेः पञ्चाशदुत्तरं वयोऽवश्यमनुमातव्यं भवति।

**बिह्लणस्यान्ये ग्रन्थाः**

विक्रमाङ्कदेवचरितमन्तराऽन्येपि ग्रन्था बिह्लणेन प्रणीताः, यतोहि शार्ङ्गधर-पद्धतौ बिह्लणनाम्नाऽनेके श्लोका उद्धृता ये नास्मिन्काव्ये प्राप्यन्ते। ततोऽन्यस्यापि ग्रन्थस्यानुमानं भवति परं नाद्यावधि कस्याऽप्यनुसंधानम्। प्रोफसर आफरेक्टो बिल्हणकृतमलंकारग्रन्थमप्येकमाह। विक्रमाङ्कचरितात्पूर्वं 'बिह्लणपञ्चाशिका' तो बिह्लण स्यासीत्परिचयः पण्डितेषु। क्वचिदस्या श्चौरपञ्चाशिकेति नामापि प्रख्यातम्। पञ्चाशिकायाः प्राचीनपुस्तके सेयमाख्या प्रख्याता, यत्–

गुर्जरधराधिपतेर्वीरसिंहस्यासीच्चन्द्रलेखा (शशिकला) नाम्नी तनया, यामसौ बिह्लणोऽध्यापयांचकार/दैवयोगादभूद् द्वयोः प्रणयः, अत एव बिह्लणो गान्धर्व-विवाहेन तामिमां परिणिन्ये। राजगौरवाभिमानी वीरसिंहस्तमिमं संवादमाकर्ण्य भृशं कुपितः, प्राणदण्डमाज्ञापयामास बिह्लणस्य। दृढप्रणयो बिह्लणः शशिकलां स्मरन् वधस्थानप्रयाणावसर एव पञ्चाशिकामिमां निर्ममौ/दैवात्सोयमपि संवादः प्रायासीद्वीरसिंहस्य कर्णयोः। कवितारसज्ञोऽसौ पञ्चाशिकायाः प्रौढपरिपाकात्प्रसन्नो न केवलं बिह्लणस्यापराधमेव चक्षमे, अपि तु बिह्लणेन सह निजतनयायाः परिणयमपि विधिवच्चकार/अनहिलवाडे चासीद्वीरसिंहनामा नरपालो नूनम्, किन्तु फार्ब्समहोदयस्य रासमालानुसारं तस्य मृत्युः ९२० तमे खिष्टाब्दे अर्थात् बिह्लणकालाच्छतवर्षपूर्वमेवासीत्। अतएव वीरसिंहसविधे बिह्लणस्याश्रयो न प्रमाणसिद्धः। न च कुहचिद् बिह्लणेनैवात्मकथायामस्य वृत्तस्योल्लेखोऽप्यकारि।

क्वचित्पुस्तके प्राप्यते यत्–मदनाभिरामनरपालस्य यामिनीपूर्णतिलका-नाम्नीं तनयामुद्दिश्य सेयं पञ्चाशिका प्राणायि कविना बिह्लणेन। स च नरपालः पाञ्चालदेशस्य लक्ष्मीमन्दिरनामके नगरेऽभूत्, किन्त्वितिहासेषु शिलालेखेषु वा नास्य नरपालस्य कुत्रचिदुल्लेखः। अन्ये कथयन्ति

यत्पञ्चाशिकाया अस्याः प्रणेता चौरनामकः कश्चिदन्य एव कविरासीत्, किन्तु नास्यापि किञ्चित्प्रमाणमुपलब्धम्।

'रहस्य-संदर्भे' लक्ष्मीमन्दिरस्य राजकुमारीं यामिनीपूर्णतिलकामालम्ब्य बिह्लणस्य स्नेहसंरम्भोऽन्येनैव प्रकारेणाऽऽवर्णितः। राजा मदनाभिरामो युवकं बिह्लणं निजतनयायाः शिक्षकं नियोक्तुमैषीत्। अत एव द्वयोः परस्परं निरीक्षणं न स्यादिति बुद्ध्या स राजकुमारीं कुष्ठरोगिणीमगदत्, बिह्लणं च जन्मान्धं तस्यै निरदिक्षत्। द्वयोर्मध्ये जवनिकां निपात्य प्रारभ्यताऽध्यापनकार्यम्। आसीद्राजकुमारी परमबुद्धिमती, अतएव स्वल्पैरेव दिनैः सा भावपूर्णस्य काव्यस्य निर्माणे समभूत्समर्था। एकदा सायं राकाशशाङ्कमालक्ष्य प्रोवाच बिह्लणः-

**'नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः।**
**नायं शशी कुण्डलितः फणीन्द्रो नायं कलङ्कः शयितो मुरारिः।।'**

पुनरन्यत्पद्यं प्रोवाच-

**'इन्दुमिन्दुमुखि लोकय लोकं भानुभानुभिरमुं परितप्तम्।**
**वीजितुं रजनिहस्तगृहीतं तालवृन्तमिव नालविहीनम्।।'**

पद्यद्वयेऽस्मिन् चन्द्रमसो रूप-संस्थानवर्णनेन प्रत्यभिजज्ञौ राजकुमारी यद्बिह्लणो न कदाप्यन्धः। अत एव सा जवनिकान्तस्तलादालोकयामास बिह्लणम्। रूपमुग्धयोरनयोस्तद्दिनादारम्य मिथः संदर्शनं प्रेमसंभाषणं च प्रावर्तिष्ट। ततः शनैर्निर्ववृते द्वयोर्गान्धर्व-विवाहः। अन्ते च गुप्तरहस्यमिदं विदित्वा प्रकुपितो राजा बिह्लणस्य प्राणदण्डमादिदेश/प्रणयी बिह्लणश्च तामिमां पञ्चाशिकां तदैव प्रणिनाय।

बिह्लणो विक्रमाङ्कचरितस्याष्टादशे सर्गे निजवृत्तं निजुगुम्फ, किन्तु न किञ्चिदप्यस्या आख्यायिकाया विषयेऽसौ संजगाद/अतएवाऽऽख्यायिकाया अस्याः सत्यत्वपरीक्षा पाठकानामेवायन्त्ता/कविता विक्रमाङ्कचरितेन सह किञ्चित्संवदते/पद्धतिकरः शार्ङ्गधरः पञ्चाशिकाया अंस्याः कतिचित्पद्यानि निजग्रन्थे समुल्लिलेख, यो हि चतुर्दशशताब्द्याम् अर्थात् बिह्लणस्य चतुःशत-

वर्षेभ्योऽनन्तरं जज्ञे। बिह्लणनाम्ना पञ्चाशिकापद्यानामुल्लेखात्सेयं कृतिर्बिह्लणस्येति स्वीकर्तव्यमापतति।

पञ्चाशिकापद्यैः सेयमाख्यायिका सत्येव प्रतीयते, यतस्तस्यामाह–

**'अद्यापि तां नृपतिशेखर-राजपुत्रीं-**
**संपूर्ण-यौवनमदालसघूर्णनेत्रीम्।**
**गन्धर्वयक्षसुर-किंनर-नागकन्यां**
**स्वर्गादहो निपतितामिव चिन्तयामि।।**

**अद्यापि तां स्वभवनान्मयि नीयमाने**
**दुर्वारभीषणकरैर्यमदूतकल्पैः।**
**किं किं तया बहुविधं न कृतं मदर्थे**
**चक्षुर्न वार्यत इव व्यथते मनो मे।।**

पद्येनानेन सूच्यते यद् वधिकद्वारा राजपुत्र्याः सदनादनीयत बिह्लणः। सा च बिह्लणाय स्निह्यन्ती तदर्थे बहुधा परिशुशोचेति पूर्वोक्ताया आख्यायिकायाः सत्यतां संकेतयति। वध्यशिलायां वधस्य पूर्वक्षणेऽपि यस्य बुद्धिर्न विक्षुभ्यति, सुरुचिरं च कवयति, को हि तं महाकविं व्यपदिशन् संकुचेत्?

## विक्रमाङ्कचरितस्य कथासंक्षेपः

एकदा समाधिस्थं पितामहं ययाचे मघवा यत्संप्रति मर्त्यलोके भूयान्प्रवृद्धोऽधर्मः। शनैर्विलुप्येत मखमुखानां स्वाहाकारः। अतएव धर्मसंरक्षकस्तत्र कश्चिदवतारणीयो भवतेति–

**'पुरन्दरेण प्रतिपाद्यमानमेवं समाकर्ण्य वचो विरञ्चिः।**
**सन्ध्याम्बुपूर्णे चुलुके मुमोच ध्यानानुविद्धानि**
**विलोचनानि।। (१-८६)**
**. . . . . अथाविरासीत्सुभटस्त्रिलोकत्राणप्रवीणश्चुलुका-**
**द्विधातुः।।' [१-८६]**

तस्माच्चालुक्यानां वंशः प्रववृते। एतस्य प्रथमपुरुषो हारीतो जज्ञे। एतद्वंशीयानामादिराजधानी[१] अयोध्याऽऽसीत्। एतद्वंशीया राजानो दिग्विजयं कुर्वाणा दक्षिणपर्यन्तमगुः। अत्रैव वंशे तैलपो[२] नाम महाप्रतापः पृथ्वी-पुरन्दरोऽभूद् यस्य कालः ९९७ ख्रिष्टसंवत्सरमारभ्य १००८ पर्यन्तः। ततो जयसिंहोऽभूत् महाप्रतापस्य यस्य कण्ठे स्वयं पुरन्दरेण पारिजातमाला प्रतिमुक्ता–

**'यशोवतंसं नगरं सुराणां कुर्वन्नगर्वः समरोत्सवेषु।**
**न्यस्तां स्वहस्तेन पुरन्दरस्य यः पारिजातस्त्रजमाससाद[३]।।'**
**[ १-८६ ]**

ततस्तस्य तनय आहवमल्लोऽभूद् यस्योपनाम त्रैलोक्यमल्लेत्यपि। एष चोलान्विजिज्ञे। मालवानभिचस्कन्दत्। धाराधिपं भोजं विद्रावयामास। दाहलधराधिपतेः कर्णस्यापि राज्यमाच्छिदत्। काञ्चीनरपालं पराजित्य परतश्चक्रे। निजराजधानीं कल्याणपुरीं प्रासादैर्देवमन्दिरैश्च प्रसाधयामास।

वैभवशिखरारूढोऽप्याहवमल्लो निःसंतानतया भृशं संतप्य महिष्या सह महादेवमारराध/प्रसन्नः पुत्रत्रयं ते भावीति वरं ददौ। यथासमयमाहव-मल्लस्य महिषी सुषुवे प्रथमतनयं यस्य नामाऽभूत्सोमेश्वर इति। द्वितीयग-र्भधारणसमये राज्ञी दधेऽश्रुतानि दोहदानि। कदाचिद्दिग्गजानां पृष्ठानि पदा

---

१. अन्वेषितं गवेषकैः शिलालेखेषु यदस्य वंशस्य ५९ राजानोऽयोध्यायामन्यनगरे च राज्यं प्रज्ञशासुः।

२. तैलपोऽयं ९७३ तमं ख्रिष्टसंवत्सरमारभ्य ९९७ पर्यन्तमनुशशास राज्यम्। एशियाटिक सोसायटी गवेषणानुसारमयं मालवानाचक्राम। तत्रत्यं राजानं भुञ्जमसं जग्राह जघान च। किन्तु एतदनन्तरं मालवनरेन्द्रो भोजश्चकाराऽस्य प्रतीकारम्। अर्थात् तैलपं पराजित्य तथैव् निजघान। किन्तु–इतिहासपरां दृष्टिमबहूकुर्वन् गुणमात्रवर्णनपरो बिह्लणो न तामेतां घटनां समुदिघलेख। सोयं महान् दोषश्चरितकाव्यलेखकस्य विह्लणस्येत्यालोचका ऊचुः।

३. मालासमर्पणास्यास्य तात्पर्यमन्ये जगदुर्यत् जयसिंहो युद्धे प्राणान्विजहौ, यत्र संमुखयोधिनोऽस्य कण्ठे देवाङ्गना काचिन्नन्दनवनमालामाचिक्षेप। राज्यकालोऽस्य १०१८ ख्रिष्टसंवत्सरमारभ्य १०४० पर्यन्तः। १००८ तः १०१८ संवत्सरपर्यन्तस्य मध्यकालो बिह्लणेन त्यक्तो यत्रास्य ज्येष्ठो भ्राता राज्यं शशास।

परामर्ष्टुमैच्छत्। कदाचिदप्सरोभिः पदसंवाहनमभ्यलषत्। कदाचिच्च खड्गाानां धाराजलं निपातुमाकाङ्क्षत्। एवं सूचितशुभोदर्कः शुभे मुहूर्ते प्रादुरासीदस्य द्वितीयस्तनयः। अभ्यवर्षन्नमरा दिव्य-कुसुमानि। सप्रमोदमनदन् दिवि देवदुन्दुभयः। आसीदस्यैव बालकस्य नाम विक्रमादित्य इति। शनैः प्रवृद्धः स शैशवक्रीडायामपि भाविनीं वीरतामङ्कुरयामास। कदाचिद्धंसानग्रहीत्, कदाचिच्च पालित-सिंहशिशूनबाधिष्ट। स्वल्पेनैव कालेन विद्यासु धनुर्वेदे चायमलभत कौशलम्। विक्रमानन्तरं राज्ञस्तृतीयः पुत्रोऽभूद् यस्य नाम जयसिंह इति।

सर्वापेक्षयाऽपि लब्धगुणातिशयं तनयं

विक्रमाङ्कं यौवराज्येनालंकर्तुमैच्छद्भूपालः। परं निसर्ग-विनीतोऽसौ ज्येष्ठव्यतिक्रमेण नाऽभिरोचयामास यौवराज्यम्। प्राबोधयत्पिता यद् भगवान् भूतभावनस्त्वामेव प्रजापालनयोग्यमसूचयत्, परं नासौ कथमप्यनुमेने। विवशो नरपालो ज्येष्ठं सोमेश्वरमकरोद् युवराजम्। परं राजलक्ष्मीः पितुः प्रणयश्च विक्रममेवाऽन्वगमत्।

पितुरनुज्ञया विक्रमादित्यो दिग्विजययात्रामकरोत्। स हि चोलान्पराजित्य तद्राजधानीं काञ्चीमलुण्ठत्। अपगतस्य निजराज्यस्य प्राप्तये प्रार्थयमानाय मालवेन्द्राय स प्रददौ साहाय्यम्। गौडं कामरूपं चाऽप्यसौ व्यजेष्ट। सिंहलस्य नरपालं निरवासयद्देशात्। अभ्यामर्दयांचकार चन्दनवनानि मलयाचलस्य। केरलदेशनरेशं प्रास्थापयत्परलोकम्। गाङ्गकुण्डं चक्रकोटं वेङ्गिं[1] चाप्यजयत्।

विजययात्रातो गृहं परावर्तमानो मार्गमध्य एव कृष्णातटे दुर्निमित्तैर्व्याकुलः कल्याणादागच्छतः संदेशहरात्पितुः परलोकप्रयाणरूपममङ्गलवृत्तमश्रौषीत्– 'भवतो दिग्विजयानन्दसंवादात्प्रमुदितोऽकस्मादेव दुरुद्धरेण ज्वरेणाऽऽक्रम्यत। अनपनेयं तमिममालक्ष्य दक्षिणगङ्गायां तुङ्गभद्रायां शरीरविसर्जनं मन्त्रिभिर्मन्त्र-यामास। तैरनुमतः स सर्वेषामग्रतस्तुङ्ङ्गभद्रातरङ्गेषु शरीरं विससर्ज। नवीना

---

१. वेङ्गिः स प्रदेशो यो गोदावरी-कृष्णामध्यगतः समुद्रतटवर्ती, आसीत्तस्मिन् स्थाने चोलानामेव शासनम्। किन्तु गाङ्गकुण्डं चक्रकोटं चाद्याप्यपरिचितम्।

सेयं घटना यत्–

**'प्रविश्य कण्ठदघ्नेऽथ सरित्तोये जगाम सः।**
**कल्लोलतूर्य-निर्घोषैश्चन्द्रचूडामणेः पुरीम्।।'** [ ४/६८ ]

पितुर्निधनमाकर्ण्य विह्वलोऽसौ न किञ्चिदचेतयत्। अतिकष्टेन लब्धसान्त्वः कृष्णातटे चकार पितुरन्त्यक्रियाम्। ततो ज्येष्ठं सोमेश्वरं सान्त्वयितुमुपागमत्कल्याणम्। न्यवसतां तत्र द्वावपि कञ्चित्कालमतिप्रेम्णा। लघुरपि विक्रमादित्यः सोमेश्वरात्सर्वेष्वपि विषयेष्वासीत्प्रगल्भतरस्तथापि तस्मिन् संमानेनाऽवर्तिष्ट। किन्तु स्वल्प एव काले सोमेश्वरो दुराचरणरतः प्रजास्वन्यायमाचरत्। राज्याधिकृतैर्गर्हणीयात्तस्माच्चालुक्यराजलक्ष्मीः कलङ्कसंकुलेवासीत्। ज्येष्ठेन निष्पीडितो विक्रमो लघीयांसं जयसिंहं सहादाय कल्याणपुराद्बहिरभूत्। किन्तु तत्पृष्ठे सेनां संप्रेष्य सोमेश्वरस्तं मुहुरखेदयत्।

ज्येष्ठेन समरमनिच्छन्नप्यन्ते विवशस्तत्सेनां सर्वथा निर्विमूल्य तं मूकीचकार। ततस्तूर्यनादेन मलयान् कम्पयन्, कोंकणपतिना जयकेशिना[१] नानोपायैः संमानितः, [२]आलुपदेशनरेश-मधीनीकुर्वन्, केरलकामिनीः पूर्वविक्रमस्मारणेन विक्लवीकुर्वन् समाससाद विक्रमश्चोलसीमानम्। चोलनरपालो दूतं संप्रेष्य मैत्रीं प्रादर्शयत्, तामिमां मैत्रीमात्मकुमारी-समर्पणेन सुदृढां चाकरोत्। चोलेन्द्रनन्दिनीं परिणीय परावर्वृते विक्रमो निजदेशम्। किञ्चित्कालानन्तरमेव चोलमहीभर्तुर्निधनम्, विरोधिनां विप्लवं च श्रुत्वा स प्रययौ पुनर्दक्षिणां दिशम्। तत्र विप्रतीपान्पराजित्य निजश्यालं निवेशयामास राजपीठे।

गाङ्गकुण्डमुपगत्य, चोलसपत्नान्निर्मूल्य, कतिचिद् दिनानि काञ्चीमध्युष्य, पुनरसौ तुङ्गभद्रामवाप। तत्र निजश्यालस्य परलोकप्रस्थानम्, वेङ्गिदेशनरेशेन

---

१. फ्लीटसाहबप्रकाशितैः शिलालेखैः सूच्यते यत् सोऽयं कादम्बवंशस्य द्वितीयो जयकेशी बभूव। एतस्य राजधानी गोपकपुरम् (गोवा)। शिलालेखेष्वेषु विक्रमादित्य-जयकेशिनोर्मित्रताया अपि सूचनास्ति।

२. 'आलुपेन्द्रमवदातविक्रमस्त्यक्तचापल॰' (५-२६)। अन्वेषकैर्न किञ्चिन्निरचीयत यत्सोयमालुपदेशः क्वासीत्। फ्लीटसाहबस्यानुमानमस्ति यत्समुद्रतटे गोवानिकटे एव सोयं संभवेदिति।

राजगेन काञ्चीपराजयं चाधिगम्य त्वरितमेवासौ काञ्चीमभ्यषेणयत्। एतदन्तरे राजिगो दूतं संप्रेष्य विक्रमज्येष्ठं सोमेश्वरमपि स्वपक्षे कृत्वा विक्रमस्य पराजयाय प्रायतिष्ट। चोल-चालुक्ययोश्चिरवैरं जानन्नपि दुर्बुद्धिः सोमेश्वरो विक्रमवैरनिर्यातनाय तेन समगंत। विक्रमो दुर्गाहिनीं वाहिनीमादाय प्रययौ शत्रुसंमुखम्। इतः सोमेश्वरः कल्याणात्प्रस्थाय विक्रममनु प्रययौ तत्संनिधौ। विक्रमाङ्को भ्रातुर्दुरभिसन्धिमिममाकर्ण्य युद्धाद्विरन्तुं तं मुहुर्मुहुरबोधयत्। किन्तु-बहिः सान्त्वं प्रदर्शयन्नप्यन्तर्विक्रमाङ्क-निर्दलनाय समचेष्टिष्ट सोमेश्वरः। ततोपि ज्येष्ठं संमुखसमरे योधयितुं नैच्छद्विक्रमः। किन्तु नक्तं नीलकण्ठेन योद्धुमादिष्टोऽसौ प्रातः प्रायासीत्समराङ्गणम्/तत्र घोरं संग्रामं[१] विधाय विजयलक्ष्मीमयमालिलिङ्ग/समरविध्वस्तः पलायिष्ट राजिगः। जीवग्राहमग्रहीत्सोमेश्वरम्।

ज्येष्ठं सोमेश्वरं पुनः कल्याणराज्ये स्थापनाय वाञ्छन्नपि, सक्रोधं शङ्करेणादिष्टोऽसौ, तदिच्छया राज्यसूत्रं स्वकरे कृत्वा दक्षिणापथस्य प्रभावशाली शासकोऽभूत्। निजं लघीयांसं जयसिंहं [२]वनवासदेशस्याऽधिपतिमकरोत्।

विक्रमादित्यः परावर्तिष्ट विरहिदुरन्ते वसन्ते कल्याणम्। तस्मिन् काल एव तत्कर्णयोः संवादः प्रापद्यत् करहाट (वर्तमाने 'कराड') राजकुमारी चन्द्रलेखा पार्वत्या आदेशात्स्वयंवरं चिकीर्षति। प्रासिध्यत्तस्याः सौन्दर्यं सर्वत्रापि तस्मिन्प्रान्ते। अत एवोत्कण्ठितो विक्रमो दूतं संप्रेष्य तत्रत्यं संवादमानाययामास। ज्ञातमनेन यद् विक्रमस्य विक्रममाकर्ण्य राजकुमारी पूर्वत एव संमुग्धा/करहाटेन्द्रोपि तदिदं संमन्यते।

---

१. एशियाटिकसोसायटी-पत्रस्य चतुर्थभागात्सूच्यते यत्तदिदं युद्धं ख्रिष्टस्य १०७६ तमे संवत्सरेऽभूत्। परमस्मिन् विक्रमेण सह योद्धुः केवलं सोमेश्वरस्यैव नामास्ति न राजिगस्य। कथानिबन्धुर्बिह्लणस्यानुसारं नाऽऽसीद्राज्येच्छा विक्रमस्य। शिवेनैव बलात्तद्राज्यं विक्रमे समर्पितम्। किन्तु-इतिहासदृष्ट्या कथापाठकाः कवेरेव नायकस्यौदार्यकल्पन-प्रतिभां कल्पयन्ति। राज्याय संभूताः शतशः संग्रामाः पुरा भ्रातृणमिति को वानवेद?

२. वनवासस्तस्यैव प्रान्तस्य नाम यः पर्वतोपत्यकायां तुङ्गभद्रा-वरदानद्योरन्तरालेऽस्ति। एशियाटिक सोसाइटी पत्रस्य चतुर्थभागाज् ज्ञायते यदस्मिन्प्रदेशे पूर्वं कादम्बवंश्यानामधिकारोऽभूत्। जीवग्राहं गृहीतस्य सोमेश्वरस्य तु किमभूदिति – अन्तपर्यन्तमपि नाऽलेखि बिह्लणेन।

स्वयंवरस्याऽऽसीत्संनिहितोऽवधिः। अतएव ससंभारं यात्रां विधाय प्राप्नोत्करहाटं विक्रमाङ्कः। तत्र करहाट-नरेश्वरेण सत्कृतः प्रायासीत्स्वयंवरमण्डपम्। प्रतीहारी पुरस्कृत्य प्राययौ कुमारी चन्द्रलेखाऽपि। ततोऽयोध्या-चेदि-कान्यकुब्ज-कलिञ्जर-मालव-गुर्जर-पाण्डय-चोलादि-नरेशेषु सर्वतः कीर्त्यमानेष्वपि नातुष्यत्कुमारी। यदा तु विक्रमस्य संमुखमुपागात्तदा स्वयमेव संतुष्य "पतिंवरा संवरणस्रजं तां श्रीविक्रमार्कस्य चकार कण्ठे।"

ततः करहाट एव चन्द्रलेखया सह सुखं विहरन् सप्रमोदमयापयद्वसन्तम्।[१] ग्रीष्मारम्भे चन्द्रलेखां सहादाय पराववृते कल्याणम्। [अत्रैव ग्रीष्म-तच्चर्या-जलविहारादिवर्णनम्, ततो राजमुखेन वर्षावर्णनम्]। वर्षर्तोरनन्तरं प्राप्तः संवादो विक्रमेण यद्वनवासदेशाधिकारी लघीयान् जयसिंहः संप्रति विरोधे शस्त्रं गृह्णातीति। चरैरेतत्संवादस्य सत्यतां निश्चित्य दूतैस्तमेनं भूयोभूयः प्राबोधयत्, परं दुर्दैवप्रेरितो नाऽबुध्यत जयसिंहः। समागमच्छरत् [अत्रैव शरद्वर्णनम्] अनेकैर्माण्डलिकनरपालैः सह संधाय विपुलवाहिनीसमेतो जयसिंहो युद्धाय समागमत्कृष्णाभिमुखम्। मार्गे मदोन्मत्तो भूयस्सु ग्रामेष्वत्याचरत्। विक्रमेण पुनः पुनः प्रतिबोधितोपि यदा नाऽऽगमन्मार्गे तदा प्रायासीद्विक्रमोऽपि रणाङ्गणम्। समघटत करिघटा-बहुलया जयसिंह-पृतनया विक्रमाङ्कस्य भीषणः[२] समरः। पूर्वं किञ्चित्प्रस्फुरन्नप्यन्ते पराजितः पलायिष्ट जयसिंहः। न ततोपि तेन सह दुर्व्यवहारं चकार विक्रमः।

विक्रमे कल्याणं प्रतिनिवृत्ते समागमच्छिशिरः [शिशिरवर्णनम्, मृगयादिवर्णनमत्र] एवं सर्वतः शत्रून्पराजित्य तद्राज्येष्वात्मनः शासनं प्रवर्तयामास विक्रमः। अदृश्यत सर्वतोपि शान्तिः। समये प्रावर्षन्पयोदाः। नाभूत्तस्य शासने किञ्चिदपि कष्टं प्रजानाम्। समये प्राप्नोत्पुत्रं विक्रमाङ्कः। स्वकीर्तिस्मारणाय

---

१. कथाभागे सुतरां संक्षिप्तेऽपि [अर्थात् कथाभागे संक्षेपेण निबध्यमानेऽपि] सप्तमे दोला-वसन्त-वर्णनम्, अष्टमे चन्द्रलेखालावण्यवर्णनम्, दशमे वनविहार-पुष्पावचय-जलक्रीडाः, एकादशे सन्ध्यादिचन्द्रोदयादिवर्णनम्। एवमादिभिः साहित्यपुस्तकाज्ञप्तश्चरितकाव्यनियमैरेव विशेषतो वर्द्धयामास काव्यं कविः।

२. इलियट साहब प्रकटितेषु शिलालेखेषु विक्रम-जयसिंहयो युद्धस्य न कुत्रचिदुल्लेखः। द्वाभ्यामपि भ्रातृभ्यां विरोधसंकथया संकुचन् स्वयं विक्रम एव ऐतिहासिकीं प्रसिद्धिं विरुरोधेति बहवोऽनुमान्ति, युद्धमिदं १०७७ तमख्रिष्टाब्दे समघटत।

देवस्थान-धर्मशालादिकमकारयद्विक्रमः- **'कृतो निवासः कमलाविलासिनः क्षमाभुजा तेन नितान्तमुज्ज्वलः'** इत्यादि। एतस्यान्तिके महान्तं तडागमखानयत्। निजनाम्ना पुरं चाऽऽवासयत्- **'निरन्तरं ब्रह्मपुरीभिरावृतं चकार तत्रैव पुरं[१] स पार्थिवः।'** एकवारं पुनर्युद्धयात्रां व्यदधाद्विक्रमः। चोलभूपालः पुनः प्रतीपतामदर्शयत्। अत एव काञ्चीमाक्रम्य पुनः पराक्रमं प्राकटयद्विक्रमः। ततः काञ्चीमायत्तीकृत्य विजयमण्डितो मण्डयामास पुनः कल्याणपुरीं विक्रमादित्यः।

## विक्रमाङ्कचरितस्य - सर्गकथा

१. मङ्गलम्। कवेः काव्यस्य प्रशंसा। आहवमल्लस्य तत्पूर्वजानां च वर्णनम्।

२. चालुक्यराजधान्याः कल्याणपुर्दा वर्णनम्। संततये आहवमल्लस्य तपः, शङ्करवरप्रदानम्, सोमेश्वरस्य जन्म।

३. विक्रमाङ्कजननम्, बालचरितम्। जयसिंहजन्म। सोमेश्वरस्य युवराजपदप्राप्तिः।

४. विक्रमदिग्विजयः, आहवमल्लमृत्युः, सोमेश्वरराज्यप्राप्तिः। विक्रमस्य पुनः कल्याणे प्रत्यावृत्तिः। सोमेश्वरस्याऽन्यायः, असदाचरणम्। जयसिंहमादाय विक्रमस्य कल्याणान्निर्गमः। सोमेश्वरसेनाया विक्रमद्वारा पराजयः।

५. विक्रमस्य द्रविड-चोल-केरलादिगमनम्। आयत्तीकरणं तद्देशानाम्। द्रविडेश्वर-कन्यया तुङ्गभद्रातटे विक्रमस्य विवाहः।

६. चोलेश्वरमृत्युः, वेङ्गि-नरेशस्य (राजिगस्य) चोलोपर्याक्रमणम्। चोलेशतनयस्य युद्धे मृत्युः। विक्रमविरोधे सोमेश्वर-वेङ्गिनरेशयोर्मन्त्रणा। विक्रमस्य ताभ्यां युद्धम्, विजयः। सोमेश्वरस्य ग्रहणम्। जयसिंहाय वनवासप्रदेशार्पणम्। विक्रमस्य कल्याणाऽऽगमनम्।

---

१. शिलालेखेष्वस्य नाम 'विक्रमपुरम्'। विक्रमखानितस्तडागः, तन्निर्मापितानि चान्यान्यभवनानि सूचयन्त्यद्यापि नगरस्यास्य पूर्वकालिकं विभवम्।

७. वसन्तः, दोला।

८. चन्द्रलेखारूपवर्णनम्।

९. चन्द्रलेखा-विरहे विक्रमव्यथा। दूतप्रेषणम्, स्वयंवरे गमनम्, स्वयंवराया वर्णनम्। राज्ञां चेष्टाः, प्रतीहार्याश्चरितकीर्तनम्। विक्रमाय वरमाल्यार्पणम्।

१०. वनविहार-जलविहार-पुष्पावचयाः।

११. सन्ध्या-चन्द्रोदयवर्णनम्। चन्द्रोपालम्भ-प्रभातादि वर्णनम्।

१२. ग्रीष्मे करहाटात्कल्याणागमनं विक्रमस्य। पौरनारीणां चेष्टाः, ग्रीष्मः, शीतोपचारः, वापी-विहारादयश्च।

१३. चन्द्रलेखां संबोध्य वर्षावर्णनम्।

१४. जयसिंहस्य शत्रुता, शरद्, दूतद्वारा जयसिंहोपदेशः। राज्यसमर्पणायापि विक्रमस्य सज्जीभावः। तथापि जयसिंहस्याऽ स्वीकारः। उभयतो रणसज्जा। कृष्णातटे शिविर-संनिवेशः।

१५. विक्रम-जयसिंहयोर्युद्धम्। जयसिंहस्य पराजयः। पलायनं ग्रहणं च।

१६. हेमन्त-शिशिर-मृगया-वर्णनम्।

१७. विक्रमस्य दानं धर्मानुष्ठानम्। तडाग-नगर-मन्दिरादिनिर्माणम्। संतानोद्भवः। चोलशासकेन पुनः संग्रामः। विक्रमविजयः। किञ्चिच्चोले स्थित्वा पुनः कल्याणे प्रत्यावर्तनम्।

१८. काश्मीरवर्णनम्। राज्ञः अनन्तस्य कलशस्य हर्षस्य एवमादीनां वर्णनम्। कविपूर्वजानां कवेः स्वचरितस्य च वर्णनम्। देशपर्यटनम्, इत्यादि।

# ग्रन्थगुम्फनस्यालोचना

ग्रन्थस्यास्य विस्तारोऽलंकारशास्त्रीय-नियमानुसरणार्थम्, कवीनां नियतेषु ऋतुवर्णनादि विषयेषु रचनाचातुर्यमभिप्रथयितुं च ऋत्वादिवर्णन-प्रभृतिभिर्वर्द्धितो भूयाम् ग्रन्थकारेण। अन्यथा चरितानुवर्णनं सप्ताष्टाभिरेव सर्गैः शक्येत समापयितुम्। आलोचकानामिदमपि कथनं यच्चरितकाव्यमप्येतत् नार्हति नूनमविकलमितिहासपदम्। महाकाव्यलेखनेन स्वपाण्डित्यप्रख्यातिः कवेर्मुख्यमुद्देश्यम्। तत्र निजाश्रयस्य राज्ञ एव नायकेत्वनालम्बनं कृत्वा साहित्यनियमैः परिपूरितमिदं चरितम्। ऋतुवर्णनमिदं काव्यशोभासामग्री-माग्रहेणेव परिकल्पयति कविः। षडपि ऋतवो वर्णनीया इत्येव वर्णितास्तावद-खिला ऋतवः। शदरत्तु स्फुटमस्थान एव वर्णिता। जयसिंहो लघुर्भ्राता युद्धाय दुर्मतिं कृतवान्, अति एव युद्धनिरोधाय नायकस्य यत्नश्चिन्ता च। तत्र मध्य एव शरदो वर्णनम्, तदपि लम्बलम्बायितम्। पठतामलोचक-चित्तानामिदमरुन्तुदं नूनम्।

युद्ध-संनाहो भिन्न-भिन्नदेशेषु भवेद्भिन्नभिन्नो नूनम्। किन्तु वीरता-प्रकरणे न तावदवतारणा शृङ्गारस्येति सामान्यतया कविवर्णनापद्धतिः। यद्यपि न मिथो विरोधो वीरशृङ्गारयोः किन्तु मध्ये प्रसङ्गमवतार्यैव कविः शृङ्गारं वा वीरं वा प्रकटयतीति दृष्टं वर्णनकाव्येषु। संस्कृतकाव्येषु बहुत्र युद्धयात्रावर्णने राजपत्नीनामपि सह प्रस्थानमवगतं तावत्। बिह्लणोपि युद्धावसरे राजभिः सहान्तःपुरप्रस्थानस्य पक्षपाती यतः शोभासज्जया वर्णयति नायकेन सहान्तःपुर-प्रयाणं कविः। न किल तदिदं भारतीया भूपाला एव चक्रुः, मोगलसम्राड्भिरप्येवमक्रियत। कदाचित्पराजये सति नाऽवरोधो विरोधिनां हस्तगः स्यादित्येव प्रकाश्यमाकूतं तस्य। किन्तु वेश्या अपि सेनया सह गच्छन्तीत्यद्भुतः क्रमो बिह्लणस्य। यथा–

**'वाराङ्गनास्तस्य तुरङ्गमेषु भ्रूकार्मुकारूढ-कटाक्षबाणाः।**
**विरेजिरे दिग्विजयोद्यतस्य सेना इवाऽनङ्ग-नराधिपस्य।।'**
[१६/३०]

## कालिदासश्च बिल्हणश्च

बिल्हणो महाकविः, सर्वथा सर्वत्र समर्थश्च। तथापि स्थाने स्थाने कालिदासस्यार्थान् शब्दांश्चानुजहार/नवमसर्गस्थं स्वयंवरवर्णनं रघोः षष्ठसर्गस्थ-मिन्दुमतीस्वयंवरमविकलमनुकरोति। रघौ सुनन्दानाम्नी प्रतीहारी इन्दुमत्या सह राज्ञां परिचयमकारयत्, अत्राऽप्यसूचित-नामधेया प्रतीहारी राज्ञां वर्णनमवतादयति। रधौ इनुमतीदर्शने तल्लिप्सूनां राज्ञां नाना चेष्टा वर्णिताः, अत्रापि तथा। षोडशसर्गस्थं मृगयावर्णनं रघोर्नवमसर्गस्यास्याऽनुकरणम्। विक्रमाङ्कस्य नगरप्रवेशे कोमलाङ्गीनां भावाङ्गी-वर्णनं, रघोः सप्तमसर्गस्थं तद् भूयस्तरामनुकरोति नास्योदाहरणप्रदर्शनेन निबन्धविस्तरो नूनमावश्यकः। आलोचनमार्मिकाः स्वयमिदमवगच्छेयुः।

अथाप्यंशतो निबन्धनशैली-साम्यं निदर्श्यते-

रघौ-

'तां प्रत्यभिव्यक्तमनोरथानां
महीपतीनां प्रणयाग्रदूत्यः।
प्रवालशोभा इव पादपानां
शृङ्गारचेष्टा विविधा बभूवुः।। [ ६/१२ ]'

विक्रमाङ्के-

तदीय-वक्त्रेन्दुविलोकनेन
सान्द्रोल्लसद्रागपयोनिधीनाम्।
तत्रागतानां पृथिवीपतीना-
मासन्विचित्राणि विचेष्टितानि।।' ६/१०/७५

रघौ-

'पाण्ड्योऽयमंसार्षितलम्बहारः
क्लृप्ताङ्गरागो नवचन्दनेन।
आभाति बालातपरक्तसानुः

सनिर्झरोद्गार इवाद्रिराजः।। [ ६/६० ]

विक्रमाङ्के–

'श्रीखण्डचर्चापरिपाण्डुरोऽथ
पाण्ड्यः प्रकामोन्नतन्चारुदेहः।
श्रीरोदधिक्षीरपरिप्लुतस्य
चातुर्यमाचामति मन्दराद्रेः।।' ९/१११

उभयत्रापि पाण्ड्यस्यैव चन्दनचर्चापाण्डुरत्वमेकया शैल्या वर्णितं दृश्येत।

रघौ–
अनेन सार्द्धं विहराम्बुराशे–
स्तीरेषु तालीवनमर्मरेषु।
द्वीपान्तरानीत-लवङ्गपुष्पै–
रपाकृत-स्वेदलवा मरुद्भिः।। [ ६/५७ ]

'तस्मादपाववर्तत दूरकृष्टा
नीत्येव लक्ष्मीः प्रतिकूल-दैवात् [ ६/५९ ]

रघौ–

'निसर्गभिन्नास्पदमेकसंस्थ–
मस्मिन् द्वयं श्रीश्च सरस्वती च।।' ६/२

रघौ–

ततस्तदालोकनतत्पराणां
सौधेषु चामीकरजालवत्सु।
बभूवुरित्थं पुरसुन्दरीणां
त्यक्तान्यकार्याणि विचेष्टितानि।।' ७/५

विक्रमाङ्के–

'अनेन मैत्रीं यदि मन्यते ते
मनोभवस्तामरसायताक्षि।

लीलावने चन्दनपादपानां
श्रयन्तु नित्यं मलयानिलास्ताम्।।' ९/१२'

विक्रमाङ्के–

'तत्रापि साऽभूद्गुणभाजनेऽपि
पराङ्मुखी श्रीरिव भाग्यहीने।।' ९/१२१

विक्रमाङ्के–

'वदामि सौभाग्यगुणं किमस्य
यत्र स्थिते श्रीश्च सरस्वती च।।' ९/१३७

विक्रमाङ्के–

'अस्मिन् क्षणे कुन्तलपार्थिवस्य
प्रवेशमाकर्ण्य पुराङ्गनानाम्।
आसन् विलासव्रतदीक्षितानां
स्मरोपदिष्टानि विचेष्टितानि।।' १२/२

रघौ–

'अपि तुरंगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे सुकेश्याः।।' ९/६७

विक्रमाङ्के–

'लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः
प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम्।
आकर्णकृष्टमपि कामितया स धन्वी
बाणं कृपामृदुमनाः प्रतिसंजहार।।' ९/५७

**विक्रमाङ्के–**

**'अपि शरधिविकृष्टैश्छिदे कङ्कपत्रै-**
**र्निकटमपि न रोहिद्गर्भिणी-चक्रवालम्।**
**स्मरणसरणिमागाद् गर्भभारालसातां**
**विलसितमबलानां यद्बलाद्भूमिभर्त्तुः।।१६/४५**

**विक्रमाङ्के–**

**'रुद्धं विलोक्य हरिणं हरिणी गताऽपि**
**व्यावृत्त्य बाणविषये नृपतेश्चचार।**
**प्रायेण देहविरहादपि दुःसहोऽयं**
**सर्वाङ्गसंज्वरकरः प्रियविप्रयोगः।।१६/४०**

प्रजापालकानां भूपालानां का कथा, प्रेमवशादन्योन्यं प्राणपरित्यागे प्रगल्भं हरिणमिथुनं दृष्ट्वा हिंसाशीलो व्याधोऽपि धनुर्मुञ्चतीति गाथापि स्मृतिपथमायाति–

**'एक्कक्कमपरिरक्खणपिहारसँमुहे कुरङ्गमिहुणम्मि।**
**वाहेण मण्णुविअलन्तवाहधोत्रं धणुं मुक्कम्[1]।।' ७/१**

कालिदासानुकरणेऽपि बिह्लणपद्यस्यास्योत्तरार्द्धं स्वाभाविकं हृदयाकर्षि च। उत्कृष्यते च पूर्वार्द्धादिति किं वा मार्मिकेषु मुधा पुनरुक्त्या।

## बिह्लणस्य काव्यकला

विह्लणकाव्यं सरसं सरलं च। काव्ये वैदर्भी रीतिः। माधुर्यव्यञ्जिका ललिता रचना च वैदर्भी नूनम्। प्रसादगुणोपि बहुत्र। साधारणोक्त्या सर्वमेव काव्यं काव्यसाहित्ये निजविशेषं पुष्णाति, किन्तु आहवमल्लस्य मृत्युः, मदमत्तस्य सोमेश्वरस्याऽनीतिः, वर्षादिवर्णनमत्युत्तमम्।

---

१. अन्योन्यरक्षणाय प्रहारसंमुखकुरङ्गमिथुने हि।
व्याधेन मन्युविगलद्बाष्पविधौतं धनुर्मुक्तम्।।

इति मम संस्कृतगाथासप्तशती।

काश्चिदुक्तयो यथा–

**'प्रौढिप्रकर्षेण पुराणरीति-व्यतिक्रमः श्लाघ्यतमः पदानाम्।**
**अत्युन्नतिस्फोटितकञ्चुकानि वन्द्यानि कान्ताकुचमण्डलानि।।**
**१/१५**

कल्याणनगरकामिनी-वर्णनं यथा–

**अविस्मृतत्र्यम्बकनेत्रपावकः स्मरः स्मितेन्दीवरदीर्घचक्षुषाम्।**
**विलासपीयूषनिधानकुम्भयोर्न यत्र वासं कुचयोर्विमुञ्चति।। २/१९**

विक्रमगर्भावस्थायां मातुर्वर्णनम्–

**निपीड्य चन्द्रं पयसे निवेशिता ध्रुवं तदीयस्तनकुम्भयोः सुधा।**
**यदुत्पलश्यामलमाननं तयोः सलाञ्छनच्छायमिव व्यराजत।।**
**२/६३**

सोमेश्वरस्य मदो यथा–

'मदिरेव नरेन्द्रश्रीस्तस्याभून्मदकारणम्।
न विवेद परिभ्रष्टं यदशेषं यशोऽशुकम्।। ४/९८

**स जातु जातुषीं मेने मन्ये नरपतिश्रियम्।**
**एतद्गलनभीत्येव क्षात्रं तेजो यदत्यजत्।। ४/१०४**

मलयानिलानां दक्षिणतः प्रयाणकल्पना–

**'कृतप्रकोपाः पवनाशनानां निवासदानादिव पन्नगानाम्**
**विनिर्ययुश्चन्दनशैलकुञ्जादाशामुदीचीं प्रति गन्धवाहाः।।'**
**७/५**

वसन्ते रवेरुत्तरदिग्गमनम्–

**'रथस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम्।**
**उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम्।।'**
**७/६**

नायिकाया नेत्रे–

'मृगीसंबन्धिनी दृष्टिरसौ यदि न सुभ्रुवः।
धावति श्रवणोत्तंसलीलादूर्वाङ्कुरे कुतः।।' ८/७२

सन्ध्यावर्णनम्–

भानुमानपरदिग्वनितानां चुम्बति स्म मुखमुद्गतरागः।
पद्मिनी किमु करोतु वराकी मीलिताम्बुरुहनेत्रपुटाऽभूत्।।'
११/९

कान्ताकचैर्बर्हिबर्हपराभवो यथा–

'द्विषन्ति राजीवमुखि स्वजीवितं
ध्रुवं मयूरास्तव निर्जिताः कचैः।
भवन्ति यद्वासवचापसंमुखाः
शिलीमुखप्राप्तिसमुत्सुका इव।।' १३/२७

हेमन्ते पद्मिनीदाहो यथा–

'मद्वैरिणः कठोरांशोरियं प्रणयभूरिति।
रोषादिव तुषारेण निरदह्यत पद्मिनी।।' १६/१४

नायिकास्तनौ–

'कुम्भौ सदम्भौ करिणां कलशौ मन्दकौशलौ।
चक्रवाकौ वराकौ च तदीयकुचयोः पुरः।। ८/४६

'मुखेन्दुचन्द्रिकापूरप्लाव्यमानौ पुनः पुनः।
शीतभीताविवान्योन्यं तस्याः पीडयतः स्तनौ।।'

'सा धारयत्यधीराक्षी दुर्वहं स्तनमण्डलम्।
गर्वपर्वतमारूढश्चित्रं कुसुमकार्मुकः।।' ८/४७

'अस्त्यप्रतिसमाधेयं स्तनद्वन्द्वस्य दूषणम्।
स्फुटतां कञ्चुकानां यन्नायात्यावरणीयताम्।

वलयावलिः–

**'कृशाङ्ग्याः कुचभारेण दूरमुत्सारितौ भुजौ।
वहतः कलहायेव वाचालां वलयावलिम्।। ८/९३**

त्रिवली–

**'दरिद्रमुदरं दृष्ट्वा चक्रे लावण्य-पूर्णयोः।
पन्थानं स्तनयोस्तस्यास्त्रिवली-विषमं विधिः।।' ८/३७**

कङ्कणम्–

**'गौराङ्ग्या भुजलावण्यमीलितं हेमकङ्कणम्।
कण्ठाश्लेषे वयस्याभिः काठिन्यादन्वमीयत।।' ८/५७**

नेत्रे–

**'श्रूयतां कौतुकं सोपि स्मरः शृङ्गारिणां गुरुः।
अमुष्याः शिष्यतामेति श्रवणोन्मुखयोर्दृशोः।।' ८/७३**

दोलाविलासेषु कान्तानां यो मधुरिमा स साक्षान्मनसिजेनैव वर्णयितुं शक्यो न कविना–यदि कामः कविरपि स्यात्तर्हीति नूतनोक्तिः।

**'सौन्दर्यमिन्दीवरलोचनानां दोलासु लीलासु यदुल्ललास।
यदि प्रसादाल्लभते कवित्वं जानाति तद्वर्णयितुं मनोभूः।।'
७/२०**

यथा वा–

**'प्रसार्य पादौ विहितस्थितीनां दोलासु लीलांशुकपल्लवानाम्।
मनोरथानामपि यन्न गम्यं तद्द्रष्टुमापुः सुदृशां युवानः।।'
७/२२**

परलोकगतस्य राज्ञः कृते विलापोक्तिः–

**'दिग्गजास्त्यजत स्वैरक्रीडाविहरणाऽऽदरम्।
संभूय भूयः सर्वेपि धारयन्तु धरामिमाम्।।**

बाहुराहवमल्लस्य सुवर्णस्तम्भविभ्रमः।
पुरन्दरधुरां धर्तुं धात्रा व्यवहितः कृतः।।' ४/७५, ७६

'पद्मे! पद्माकरानेव पुनः सद्‌मत्वमानय।
अयं त्वया पतिभ्रंशसंतापोऽन्यत्र दुःसहः।।' ४/७९

शोकग्रस्तस्य विधातारं प्रत्युपालम्भः–

'अपूर्वः कोपि दुर्मेधाः शङ्के वेधाः समुत्थितः।
पुराणक्लेशनिष्पन्नां स्वकृतिं नाशयेत्कथम्।।' ४/८१

'विधास्यति कथं धाता सर्गरत्नं तथाविधम्।
कथं वा संघटिष्यन्ते तादृशाः परमाणवः।।' ४/८४

राज्ञो विजययात्रया समुद्रादीनां क्षोभवर्णनं यथा–

'अन्विष्यन्मरणोपायं दुःखात्तत्सैन्यलुण्ठितः।
कालकूटं हरग्रस्तं शुशोच पयसां निधिः।।' ४/१६

'शिलाभिः करटिक्षुण्णश्रीखण्डस्यन्दपाण्डुभिः।
मलयस्तद्बलक्षोभादस्थिशेष इवाऽभवत्।।' ४/१०

उभयपार्श्वे निष्पिण्डनादेव कटेः कृशता, यथा–

'स्तनौ भारार्पण-व्यग्रौ, काञ्ची कलकलोन्मुखी।
कस्यां दिशि न मध्यस्य तस्याः कार्श्यं सहैतुकम्।।'
८/४०

शोभावर्णने भङ्ग्या प्रोक्तिः–

'लम्भिताः कदलीस्तम्भास्तदूरुभ्यां पराभवम्।
अत्यन्तमृदुभिर्लब्धो जडैः क्व जयडिण्डिमः।।' ८/१५

दोलारूढलोलाक्षीदर्शने नेत्रयोर्द्विक्रोशमार्गभ्रमणस्येव श्रमः–

---

१. लटभो वक्रो मनोहरो वेति बहुज्ञाः।

**'समुद्वहन्त्योस्तदथाऽऽयताक्षीदोलाविलोलाननमार्गसख्यम्।**
**दृशोः क्षितीन्द्रस्य गतागताभ्यां गव्यूतिमात्रं भ्रमणं बभूव।।'**
**१०/३६**

श्रीहर्षस्य (नैषधचरितनिर्मातुः) कल्पना यथा क्वचिल्लोकसीमान-मुल्लङ्घयति, तथा बिह्लणस्यापि–

**'न राजकान्ताभिरदृश्यतोर्वी स्तनद्वयेनाधिकमुन्नतेन।**
**हंसास्तुलाकोटिनिनादकृष्टाः पुण्यैः पदन्यासपदं न जाताः।।'**

**'तन्नितम्वस्य निन्दन्ति वृद्धिं परिजनाङ्गनाः।**
**काञ्चीनवनवग्रन्थिग्रथनेन कदर्थिताः।।' ८/२१**

**'अपर्याप्तभुजाऽऽयामः सखेदोऽस्याः सखीजनः।**
**श्रोण्यां कथंचित्कुरुते रशनादामबन्धनम्।।' ८/१९**

**कुचद्वये चकोराक्षी चिबुकप्रान्तचुम्बिनि।**
**नर्मोक्तिषु न शक्नोति स्थातुं लज्जानतानना।।**

कल्पनाप्रवाहे वहतां कवीनां रूपवर्णनमपि विरूपमिव दृश्यते क्वचिद्। यथा बिह्लणस्य–

**'नाभिसङ्गेन गौराङ्ग्याः शोभते रोममञ्जरी।**
**कन्दर्प हेमकटकाल्लाक्षाधारेव निर्गता।।' ८/२६**

रोमाली-वर्णने कल्पनासामञ्जस्यं यथा–

**'लिखन्त्याः कामसाम्राज्यशासनं यौवनश्रियः।**
**गलितेव मषीधारा रोमाली नाभिगोलकात्।।' ८/३१**

गोलकपदं त्वत्रापि वैरूप्यमिवोपस्थापयति।

अन्यान्य-काश्मीरकाणां 'लटभवनिता' इत्यादिप्रयोग-वत् 'लटभभ्रूः' इति प्रयुङ्क्ते बिह्लणः–

**'तस्याः पादनखश्रेणिः शोभते लटभभ्रुवः।' ८/६**

प्रसादगुणसौन्दर्येऽपि वर्णमैत्रीमयं वर्णनं स्थाने स्थाने। यथा–

**'अन्तरङ्गमनङ्गस्य शृङ्गारकुलदैवतम्।**
**अङ्गीकरोति तन्वङ्गी सा विलासमयं वयः।।'** ८/५

साहित्यदर्पणाद्युदाहरणेषु यथा प्रसिद्धम्–

**'मल्लिकामुकुले भाति गुञ्जन् मत्तमधुव्रतः।**
**प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव।।'** इति

तदनुहारि वर्णनं यथा–

**'लग्नद्विरेफ-ध्वनिपूर्यमाणं वासन्तिकायाः कुसुमं नवीनम्।**
**आसादयामास वसन्तमास-जन्मोत्सवे मङ्गलशङ्खलीलाम्।।'**
**७/४१**

विपिनस्थलीनां कान्तो वसन्तो वर्णित एव पूर्वैर्यत्र वक्राणि पलाशानि नखक्षतानीवाऽराजन्त। यथा कालिदासस्य–

**'बालेन्दुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि।**
**सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम्।।'**

किन्तु वनस्थलीनां बालको वसन्त इति सुमधुरमाह बिह्लणः–

**'नवीनदन्तोद्गमसुन्दरेण वासन्तिकाकुड्मलनिर्गमेन।**
**उत्सङ्गसङ्गी विपिनस्थलीनां बालो वसन्तः किमपि व्यराजत्।।'**
**७/३४**

सोथमर्थो व्रजभाषाकवितायामपि सम्यगाबद्धो यथा–

**'डार द्रुम पालक, बिछोना नव पल्लव के**
**सुमन झँगूला तेई तन छबि भारी दै**
**पवन झुलावैं केकी कीर बतरावैं, मिलि**
**कोकिल हरखि हुलरावैं कर तारी दै।**
**पुहुप पराग सौं उतार करैं राई लोन**
**कुञ्जगली-नायिका लतानि सिर सारी दै**

मदन नरेस जू को बालक बसन्त ताहि
प्रातहि खिलावत गुलाब चटकारी दै।।'

साम्प्रतिका देशाभिमानिनः समालोचयन्ति यत्संस्कृत-विदुषां हृदि नाभिमानो निजदेशस्य, न च संमानो जन्मभूमेः। किन्तु वराकास्ते न परिचिताः प्राचीनसाहित्यस्य। निजकृतिभिरार्यावर्तमिमं चिरायाऽमरीकुर्वन्तः संस्कृतकवयो मञ्चमारुह्य न केवलं मौखिकवार्ताभिरेव, अपि तु आचन्द्रतारकं स्मरणीयेषु निजकाव्येषु निजजन्मभूमेरभिमानं तथा चित्रयामासुर्यथा समग्रमपि शिक्षितं जगत्तेषां देशाभिमानस्य संपद्येत सर्वदैव साक्षि। विद्यापतिर्बिह्लणः स्थाने स्थाने निजदेशस्य काश्मीरस्य प्राकृतशोभासौभाग्यं कवितागुम्फगौरवं च साभिमानमुपन्यस्यति–

'सहोदराः कुङ्कुम-केसराणां भवन्ति नूनं कविताविलासाः।
न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः।।' १/२१

'काव्यं येभ्यः प्रकृतिसुभगं निर्गतं कुङ्कुमं च
च्छायोत्कर्षाद्भवति जगतां वल्लमं दुर्लभं च।
यस्मिन्नन्तः स्थितवति जगत्सारभूते प्रयाताः
काश्मीरास्ते नियतमुरगाधीशरक्षास्पदत्वम्।।' १८/१९

निजजन्मभूमेः 'खोनमुखग्रामस्य' गौरवं साभिमानोत्कर्षमाह–

'ब्रूमस्तस्य प्रथमवसतेरद्भुतानां कथानां
किं श्रीकण्ठश्वशुर-शिखरि-क्रोड-लीलाललाम्नः।
एको भागः प्रकृतिसुभगं कुङ्कुमं यस्य सूते
द्राक्षामन्यः सरस-सरयू-पुण्ड्रकच्छेदपाण्डुम्।।' १८/७२

काश्मीरक-कवितागुम्फस्य मृद्वीकागुच्छकस्य च पीयूषसाम्यं सूचयन् सुललितमाह सः–

'मन्ये मन्थाचलविदलितान्निर्गता दुग्धसिन्धो–
र्भूत्वा यस्मिन्नमृतलहरी सत्कवीनां वचांसि।
प्रेमाकूतं कुवलयदृशां शीकरैः पूरयन्ती
द्राक्षाखण्डेष्वमृतकिरणापाण्डुषु स्थैर्यमाप।।' १८/७

संस्कृतसरस्वत्याः का कथा, येषु काश्मीरेषु हिन्दीभाषाविदोपि संप्रति विरलायन्ते, अन्यथा 'पण्डितेत्युपाधिमात्रमण्डिताः काश्मीरकब्राह्मणा यवनभाषायाम् (उर्दू) यवनलिप्यामेव चात्मानमवलिप्तं कलयन्ति, तेष्वेव काश्मीरेषु पुरुषास्तु दूरतः, स्त्रीणामपि संस्कृतभाषा प्राकृतभाषा च जन्मभाषावत्प्रतिगृहमासीदिति सगर्वाभिमानमुल्लिखति बिह्लणः–

**'ब्रूमः सारस्वतकुलभुवः किं निधेः कौतुकानां**
**तस्याऽनेकाद्भुतगुणकथाकीर्णकर्णामृतस्य।**
**यत्र स्त्रीणामपि किमपरं जन्मभाषावदेव**
**प्रत्यावासं विलसति वचः संस्कृतं प्राकृतं च।।' १८/६**

किं बहुना, कायस्थानां कुटिलां लिपिं सोयं प्रत्यक्षं निन्दति। किञ्च नवीनमिदं कौतूहलमुत्पादयति यत् काश्मीरक-कविभिर्यान्येतानि राजचरितान्यङ्कितानि कवितानिबन्धेषु, न तानि बन्दिनामिव केवलं स्तुतिकाव्यानि नूनम्। प्रत्यक्षस्तुतिपाठकाः केवलं गायका एव पुरा आसन्, न केऽपि कवय इति साभिमानोद्रेकमात्मनः कविताया उत्कर्षं ध्वनयति सोयम्–

**'नो कायस्थैः कुटिललिपिभिर्नो विटैश्चाटुदक्षै-**
**र्न प्रत्यक्षस्तवनपटुभिर्लुण्ठिता गायकैश्च।**
**देवागार-द्विजगुरुगृहाण्येव यत्संगृहीता**
**याता लक्ष्मीर्निजचपलतादोषशुद्ध्यर्थिनी व।।' १८/४२**

कालिदासादि-प्राचीन-कवीनामपेक्षयापि क्वचित्क्वचिद्विषये विशेषाभिमानमावहति विह्लणो नूनम्। अस्मत्प्रबन्धानामेव मार्मिकपरीक्षकाः सुतरां विरला इति भूयस्तरामभिमन्यतेऽसौ। आह सः–

**'रसध्वनेरध्वनि ये चरन्ति संक्रान्तवक्रोक्ति-रहस्यमुद्राः।**
**तेऽस्मत्प्रबन्धानवधारयन्तु कुर्वन्तु शेषाः शुकवाक्यपाठम्।।'**
**१/२२**

कालिदासः सविनयं यत्र निजकाव्यपरीक्षां प्रार्थयते–

**'तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहतेवः।**
**हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा।।' इत्यादि,**

तत्र हि सगर्वविभासो बिह्लणस्य वाग्विलासः–

**'अलौकिकोल्लेखसमर्पणेन विदग्धचेतःकषपट्टिकासु।
परीक्षितं काव्य सुवर्णमेतल्लोकस्य कण्ठाभरणत्वमेतु।।'१/२४**

मम कृतयो निकषपरीक्षोत्तरं मार्मिकाणां निधिस्थानापन्ना एव भवितार इति परीक्षातः पूर्वमेव स्थिरीकुर्वन्नाह बिह्लणः–

**'उल्लेखलीलाघटनापटूनां सचेतसां वैकटिकोपमानाम्।
विचारशाणोपलपट्टिकासु मत्सूक्तिरत्नानि निधीभवन्तु।।'१/१९**

रसध्वनिपूर्ण-वक्रोक्ति-काव्यरचनागर्वं स्वमुखत एव केवलं न प्रकटीकृतवान्बिह्लणो यावत्स्थाने स्थाने कार्यरूपेऽपि तं परिणमितवान्। यथाहि विक्रमस्य वीर्यमभिव्यज्यते पाटवेन–

**'चोलान्तःपुरगेहेषु सिंहानां तस्य बाहुना।[१]
लोललाङ्गूलदण्डानां द्वाररक्षा समर्पिता।। ४/२५
चिन्तया दुर्बलं देहं द्रविडो यत्पलायितः।
संकटाद्रिदरीद्वारप्रवेशे बह्वमन्यत।।[२] ९/२६**

**'दृश्यन्तेऽद्यापि तद्भीतिविद्रुतानां द्रुमालिषु।
अलकाश्चोलकान्तानां कर्पूरतिलकाङ्किताः।।' ४/२७ इत्यादि।**

अतएव नैषधसदृशान्यपि काव्यानि निजालोचनानिकषे 'विसंष्ठुलानि' साधितवान् पण्डितराजो जगन्नाथो भूयःसु ले स्थलेष्वलंकृतकाव्योदाहरणेषु बिह्लणसूक्तीरेव सन्तोषतः समालोचितवान्। यथा निदर्शनायाम्–

**'तत्पादनखरत्नानां यदलक्तकमार्जनम्।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः।।' ८/९**

उत्प्रेक्षायाम्–

**'चोलस्य यद्भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः।
अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि।।'
१/११६**

अस्तु। एवमादिसामर्थ्योपबृंहितां गर्विष्ठमनोवृतिं चित्रयन् बिह्लणप्रशस्ति-विषयकः 'सुभाषितरत्नभाण्डागारेपि श्लोक एकः प्राप्यते–

**'बिन्दुद्वन्द्वतराङ्गिताग्रसरणिः कर्ता, शिरोबिन्दुकं**
**कर्मेति प्रतिबोधितान्वयविदो ये येऽपि तेभ्यो नमः।**
**ये तु ग्रन्थसहस्त्रशाण-कषणत्रुट्यत्कलङ्कैर्गिरा-**
**मुल्लेखैः कवयन्ति बिह्लणकविस्तेष्वेव संनह्यते।।'**[1]

## बिह्लणस्य ग्रन्थौ

बिह्लणस्यास्य द्वावेव प्रबन्धावुपलब्धौ पञ्चाशिका च विक्रमाङ्कचरितं च। पञ्चाशिकायाः पञ्चाशत्स्वपि पद्येषु, आद्ये 'अद्यापि' इति विद्यते। चेदयं कथानकः सत्यस्तर्हि प्राणोत्क्रमणकाले न कस्यापि शृङ्गारविलासे मनो भवति। लेशतोऽप्युद्वेजकशून्ये मनसि मनसिजोद्गमो भवतीति साहित्य-विदो विदुः। किन्तु 'अन्ते स्मरामि' इति निमीलनवेलयामपि प्रणयविकासः कविताविलासश्च महाधृतेर्बिह्लणस्यैवातिशयः। अस्याः पञ्चाशिकाया अन्तिमः श्लोको ह्याबालवृद्धं प्रसिद्धः प्रसेधयति पञ्चाशिकामेनाम्। यथा हि–

**'अद्यापि नोज्झति हरः किल कालकूटं**
**कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे।**
**अम्भोनिधिर्वहति दुःसहबाडवाग्नि-**
**मङ्गीकृतं सुकृतिनः परिपालयन्ति।।'**

## 'बिह्लणकाव्यम्'

काव्यमालात्रयोदशगुच्छके 'बिह्लणकाव्यम्' इति कृतशीर्षकं पुस्तकमेकमवाप्तम्। ग्रन्थोऽयं नाम्ना स्वयं बिह्लणकृतिः, किन्तु काव्ये

---

१. बिन्दुद्वन्द्वेन विसर्गात्मकेन (:) तरङ्गिता अग्रसरणिर्यस्य स कर्ता, शिरसि बिन्दुर्यस्य तत्कर्म, यथा–। 'रामः सीतां जगाद इति अत्र रामः बिन्दुद्वय (विसर्ग) युक्तः कर्ता, 'सीतां' इति शिरोबिन्दु (अनुस्वार) युक्तं कर्म इति प्रतिबोधितं वाक्यादेरन्वयं विदन्ति, अर्थात्साधारणज्ञानशालिनो ये कवयस्ते उपेक्ष्या इत्यर्थः। ये तु रचनागर्वशालिनः कवयतेष्वेव बिल्हणः संलापाय संनद्ध इत्याशयः।

तृतीयपुरुषरूपेण बिह्लणस्य वर्णनम्। च्युतसंस्कृतिदोषोप्यत्र स्थाने स्थाने 'विद्यासुन्दरा' दिकाव्यानामपि– 'नीतानि नाशं जनकात्मजार्थे दशाननेनाऽपि दशाननानि' इत्यादि पद्यान्यप्यत्रोपलभ्यन्ते। कानिचित्पद्यानि परस्ताद्भाविनां कवीनामप्यत्रोपलब्धानि, ततश्च काव्यमिदं केनचिदन्येनैव संगृहीतम्, न बिह्लणेनेति बलादेव निश्चेतव्यं भवति।

बिह्लणस्य शशिकलायाश्चाख्यानकमस्त्यस्मिन्नपि काव्ये/आसीद् गुर्जरे महिलपत्तनम्। तत्रत्यो राजा निजसुतायाः पाठनार्थं पण्डितमेकं प्रतीक्षते स्म/ तत्रत्यो राजपुरोहितः काश्मीरकवेर्बिल्हणस्य परिचयं कारयामास राज्ञा। पाण्डित्यप्रीतो राजा बिह्लणमध्यापकं चकार निजसुतायाः। अतएव स्तोकैर्दिनैः शशिकला विदुषी बभूव।' ततो बिह्लणः कामशास्त्रमध्यापयामास। सा 'पूर्वजन्मपत्नी।' शास्त्रं पठन्त्येवाऽनुरक्ता, अत एव बभूव द्वयोर्गान्धिर्वविवाहः।

बिह्लणकाव्यस्यैकस्मिन् प्रतिपुस्तके घटनायाः स्वरूपमेवमुपलब्धं यद् राजा बिह्लणस्य हस्ते निजपुत्र्या हस्तें समर्प्य 'अध्याप्यतामियम्' इति सस्नेहं प्रार्थयते। अतएव शिष्याध्यापकयोर्मध्ये नाऽवगुण्ठनम्। किन्त्वेकस्मिन्पुस्तके शशिकला अवगुण्ठनवती, शिष्याध्यापकयोर्मध्यतो 'जवनिका' विलम्बते। एकदा बिह्लणो बभाषे–

**'जातं सुजन्म विफलं भुवने नलिन्या**
**दृष्टं यया न विमलं तुहिनांशुबिम्बम्।'**
**यावच्छ्रुतं सुवचनं सुकवेस्तदित्थं**
**किञ्चिद्विहस्य तुहिनांशुकला बभाषे।।**

**चन्द्रकला–**

**'दृष्टानि कोकमिथुनानि भवन्ति, यैश्च**
**सूर्यांशुभिर्जगदिदं निखिलार्थमेति।**
**संपूर्णतापि शशिनः किल निष्फलैव**
**दृष्टा यया न नलिनी परिपूर्णरूपा।।'**

एतदनन्तरं द्वयोर्मेलनम्। बिह्लणस्याध्यापकत्वे समभूद्राजपुरोहितो वराकः प्रतिभूः। अतएव तदिदं रहस्यं परिज्ञाय सुतरां न्यषेधद्राजपुरोहितः। परं

प्रणयप्रवणो बिह्लणो नेदमकार्षीत्कर्णे। रहस्यमिदमवगतं राज्ञा। शूलारोपणस्याज्ञा प्रादीयत राज्ञा प्रकुपितेन। बिह्लणे दयमानाः शूलारोपकाः स्वेष्टदेवं स्मर्तुमसूचयन् बिह्लणम्। बिह्लणेनोक्तं मे इष्टदेवः शशिकला। अतएव तस्मिन्नेव समये पञ्चाशिकाया निर्माणम्। गुणग्राहकाणां दर्शक-श्रावकाणां बभूव प्रगाढप्रीतेरुपरि विस्मयश्च विषादश्च। असूच्यत राज्ञे सर्वाऽपि परिस्थितिः। राजमहिष्या अपि समदीयत सूचनाऽन्तःपुरमहिलाभिः। समसूच्यत चन्द्रकलाया अपि प्राणत्यागेच्छा राजमहिष्यै-प्रासादात्पतित्वा राजकुमारी प्राणान्विसृजेदिति। अवर्ण्यत नितरामुभयोः प्रीतिः। राज्ञी द्वयोः प्रणयं जानती हत्याकाण्डादकम्पत। सा सर्वमिदं राज्ञे निवेदयामास। राजा राजपुरोहितादिभिर्मन्त्रणां विदधौ। अन्ते राजपुरोहितादीनां परामर्शेन अपराधक्षमोत्तरं समभूद्द्वयोर्विवाहः। निजं गौरवमभिरक्षता भूभृता समदीयन्त शतं ग्रामाः, भूयस्तमं हस्तितुरगादियौतकजातं च।"

प्रतीयते यत् श्रुतायाः प्राचीनाख्यायिकाया उपरि कस्यचित्कवेः सेयं कृतिः। निर्माणकालस्य कर्त्रादेश्च न किञ्चिद्वर्णनम्। अन्यान्यपुस्तकानां प्राप्तिघटनाऽपि काव्यमालायां प्रायो निरदिश्यत तत्संपादकमहाभागेन। किन्तु तदिदं पुस्तकं कुतः समवाप्तमिति न किञ्चिन्निर्दिष्टं तत्रापि। बिल्हणविषये घटनाया अमुष्याः संनिवेशमुत्प्रेक्षमाणैः सेयमपि किंवदन्ती समुद्धृतास्तीति जाने। आख्यायिकायां प्रोक्तं बिह्लणाय शतग्रामप्रदानमपि न घटते। एवं चेत्कर्णाटादिदक्षिणप्रान्तेषु किमित्याहिण्डेत कविः? स्वयमेव धनाधीशो भूत्वा कवीनां कल्पवृक्षः कुतो न स्यात्?

## ऐतिहासिकं विवरणम्

'बम्बई गज़ेटियर' इत्यनेन तथा गवेषणापुस्तकैर्ज्ञायते यच्चालुक्यवंशीयाः प्रावर्द्धन्त भारतस्य दक्षिणप्रान्ते। द्वे शाखे तावद्वंशस्यास्य-पूर्वकालिकी उत्तरकालिकी। च। पूर्वस्या राजधानी वातापिपुरम् (बादामी) [बीजापुरप्रान्ते]। एतच्छाखायाः सर्वतः प्रतापी द्वितीयः पुलकेशी, यो हि कान्यकुब्जेशं हर्षं पराजिग्ये। सार्वभौमगौरवं चायमुपलेभे। ९० सहस्रग्रामाधिपतिः, अस्यैव शासनकाले चीनदेशीयो ह्वानत्साङ्गो भारतमुपेतः। अनेन हि पुलकेशीमहत्त्वं विस्तृत्य वर्णितम्। अस्याः शाखायाः सप्तमो राजा विक्रमादित्यः (प्रथमः)।

अस्य राजत्वे वंशस्य शाखा गुर्जरदेशस्य अनहिलपट्टने स्थापिता। जयसिंहराज-स्तत्रत्य: प्रथमो राजा। गुर्जरदेशेऽस्य वंशस्य द्वित्रा: शाखा: समभवन्। अष्टमशतके चान्त:। ख्रिष्टीय ७५३ तमवर्षत: पूर्वकालिकश्चालुक्यानामधिकारो राष्ट्रकूटराजेन दन्तिदुर्गेण हृत:। एतदनन्तरं महाराष्ट्रे राष्ट्रकूटसत्ता प्रसृता।

महाराष्ट्रे राष्ट्रकूटसत्ता २०० वर्षाणि। एतदन्तराले चालुक्येषु न कोपि नामाङ्कितो बभूव भूपाल:। दशमशताब्द्यां चालुक्यवंशीयस्तैलपो राष्ट्रकूटवंशजात् कक्कलराजत: सार्वभौमत्वमाच्छिद्य उत्तरकालिकीं चालुक्यवंशीयां शाखां स्थापयामास। अस्यां हि संपूर्णा एकादश राजानो बभूवु:–

१. तैलप:

२. सत्याश्रय:

३. विक्रमादित्य: (१)

४. जयसिंह:

५. सोमेश्वर: (१) (उपनाम आहवमल्ल:)

६. सोमेश्वर: (२)

७. विक्रमादित्य: (२) [उपनाम विक्रमाङ्क:]

८. सोमेश्वर: (३)

९. जगदेकमल्ल:

१०. नूर्मडि तैलप:

११. सोमेश्वर: (४)

अन्तिम: सोमेश्वर: ख्रि ११८२ त: ११८९ तमवर्षपर्यन्तं राज्यं चकार। एतदनन्तरं दक्षिणप्रान्तस्य सार्वभौमत्वं यादववंशीयानां हस्तगतमभूत्।

विक्रमाङ्कोऽयमुत्तरकालिकचालुक्यशाखाया: सप्तमो राजा। अयं १०७६ तम-ख्रिष्टीयवत्सरत: ११२६ तमवर्षपर्यन्तं शशास राज्यम्। एतत्पितुर्नाम

सोमेश्वरः, परं स आहवमललनाम्ना विख्यातः। एतदेव बिह्लणोपि लिलेख। केनचित् शिलालेखेन 'त्रैलोक्यमल्ल' इत्युपाधिरपि परिज्ञायते। अयमेव कल्याणनगरीं वासयामास।

सोमेश्वर-जयसिंहयोर्विषये बिह्लणेन यल्लिखितं तस्य भूयानंशस्ताम्रपत्र-शिलालेखैः प्रमाणितो भवति। बिह्लणेन लिखितम्-'आलुपराजोऽपि अधीनतां स्वीचकार।' तदिदमालुपनगरं अर्वाचीनम् 'अलुपै' इत्यनुमीयते। 'अलुपै' मलाबार-समुद्रतटे एकः प्रान्तः।

विक्रमाङ्कः पञ्चाशद्वर्षाणि राज्यं शशास। स 'कलिविक्रम' 'परमाडिराय' 'परमर्द्दिदेव' इत्युपाधीन् दधार। स हि शकसंवत्सरस्थाने निजसंवत्सरं प्रचारयितुमियेष परं न परिचचाल सः। यस्याश्चन्द्रलेखायाः स्वयंवरवर्णनं बिह्लणश्चकार तस्याः 'चन्दलदेवी' ति शिलालेखेषु नाम। सोयं विक्रमो विदुषामाश्रयदाता। बिल्हणातिरिक्ता अन्येपि महाविद्वांसोऽस्याश्रिता बभूवुः, येषु याज्ञवल्क्यस्मृतिटीकाया मिताक्षरायाः कर्ता विज्ञानेश्वरभट्टोऽपि बहूनां परिचितः। मिताक्षरायाः समाप्तौ त्रीणि पद्यान्यनेन दत्तानि। यैः—'जगति कल्याणसदृशं न नगरम्, विक्रमादित्यसमो न राजा, विज्ञानेश्वरसमः पण्डितो न। यावच्चन्द्रदिवाकरं विक्रमो जीवेत्। एष हि याचकेभ्यः स्वच्छन्दं धनं दत्ते। विष्णुं ध्यायति। अयं षड्रिपूनजयत्। पश्चिममारभ्य पूर्वसमुद्रान्ताः सर्वे राजानोऽस्याधीनाः।' इति नगर्या राज्ञश्च प्रशंसनमवगम्यते। ततश्च स्पष्टमनुमीयते यद् बिल्हण-विज्ञानेश्वरयोराश्रयप्रदाता महाप्रतापो विक्रमो विक्रमाङ्कान्नान्यः। एतत्सामयिकाः २०० शिलालेखाः, ये बिह्लणसूचितमितिहासं समर्थयन्ते।

## चरितकाव्यनिर्माणम्

पुरा संस्कृतप्रचारो देशे भूयानासीत्। अनेके विद्वांसः संस्कृते पारंगताः स्वयशः स्थापयामासुर्दिग्दिगन्तरेषु। नानाविषयकान् ग्रन्थान्निर्माय देशस्यास्योपकारेण सह स्वनामधेयमप्यजरामरं चक्रुः राजानोऽप्यनेके निजाश्रये पण्डितान्पुपुषुः, ये हि जीविकाचिन्तातो निवृत्ताः स्वजीवनं शास्त्रावलोकन-निर्माणादिना चिराय कृतार्थयामासुः। तदा हि नासीत्कोप्येतादृशी माण्डलिको यस्याश्रये द्वित्राः पण्डिताः कवयो वा न स्युः। एवं स्थितेऽपि संस्कृतसाहित्ये चरितकाव्यान्यतीव विरलानीति चित्रम्। यदि संस्कृतकवयश्चरित-

काव्यान्यलेखिष्यंस्तर्हि भारतीयमिदमितिवृत्तमपूर्णं नाऽस्थास्यत्, यत्र हि वैदेशिका नानाविधान् भ्रमपूर्णानात्मप्रयोजनसाधकान् वृत्तान्तानुपक्षिप्य स्वमनीषितमितिहासं समर्थयन्ते। यदि ते स्वाश्रयदातृणामेव चरितं निजग्रन्थेष्वसूचयिष्यन् तर्हि इतिहासविषये समभविष्यद्भूयसी सहायता। किन्तु मोगलादीनां राज्योत्क्रान्त्यादिभिरनुमीयते यत् एवंविधानि चरितकाव्यानि राजविप्लवे नष्टानि। अथवा यदि तैरेवंविधानि काव्यानि न प्रणीतानि तर्हि तत्र मानुषचरितेषु प्राचामनास्थैव परमं कारणम्। प्राञ्चः कवयः पौराणिक-महापुरुषानेव काव्यनायकतया संमानयन्ति स्म, तेषामेव च कीर्तनेन निजलेखनी कृतार्थयन्ति स्म। लौकिकपुरुषाणां काव्यकीर्तनं तेषां दृष्टौ 'वाचो विग्लापनं हि तत्'। अतएव हि पौराणिकान्पुरुषानालम्ब्य सहस्रशः काव्यानि च नाटकानि च प्रणिन्यिरे, उपलभ्यन्ते चापि तानि, किन्त्वितरेषामङ्गुलिगणनीयानि नूनम्। यानि च चरितानि लिखितान्यपि, तान्यपि मनुष्य-चरितेषूपेक्षावशान्न कैश्चित्प्रचारितानि। तत्पुस्तकानि ग्रीष्म-वर्षादिषु-यथास्थितं नष्टानि।

## प्रकृतचरितस्यालोचना।

प्रकृतमिदं चरितम् (विक्रमाङ्क०) जीवनचरितेषु गण्यते परं तत्सामग्री अतीव विरला। अलंकारशास्त्रनियमानुसारम् ऋतु-जलविहार-वाटिका-सायं-प्रातरादीनां वर्णनैरेव काव्यमिदं पूरितम्। अष्टादशसर्गाणां स्थाने अष्ट-नव सर्गैरेव काव्यमिदमपूरयिष्यत, यदि नियमानुवर्तनमात्रे दृष्टिर्नाभविष्यत्। सप्तम-त्रयोदशसर्गौ तु सुस्पष्टमनावश्यकौ चरित्रचित्रणे। तयोरभावेपि न काचिच्चारित्र्येऽपूर्णता प्राप्स्यत। परम् ऋतु-नायिकारूपवर्णनं महाकाव्य-लक्षणमुक्तम्। आरम्भादन्तपर्यन्तं काव्यप्रणयनप्रवृत्तिरालंकारिकी अतिशयोक्तिपूर्णा च। क्वचिद्वर्णनीयविषया दूरं त्यक्तव्या अभूवन्, अवर्णनीयाश्च विस्तृत्य निरूपणीया आसन्। अवर्णनीयेषु विस्तृतेषु वर्णनीयविषयाणाम-भिभवस्त्वनिवार्य एव। लिखितं कविना-स्वप्रतिपक्षस्य चोलमहीपतेः पूर्णरूपेण पराभवं विधाय विक्रमेण तद्विषयः-सर्व एव स्वाधीनीकृत इति। किन्तु स्वल्पाग्रे एव चोलोपरि द्वितीयमाक्रमणं भवति, महता संनाहेन च भवति। यदि चोलानां पूर्णपराभवोऽभविष्यत्तर्हि स्वल्पकाल एव कथं तेषामुत्थानम-भविष्यत्? अस्तु, काव्यरूपेण यच्चरितं चित्रणीयं भवति तत्रालंकारिकं

रूपमनिवार्यं भवति। प्रोक्तं चाप्यानन्दवर्द्धनाचार्येण 'ध्वन्यालोके'–'न हि कवेरितिवृत्तमात्रनिबन्धने कवित्व-चारितार्थ्यम्' इत्यादि।

–एवमेव चरितकाव्ये वर्णनीयस्य प्रशंसाऽप्यतिशयं गाहते तावत्।

ते हि राम-कृष्ण-युधिष्ठिर-नलादिकक्ष्यायामादरणीयाः, निर्दोषाश्च संपाद्यन्ते। आहवमल्लपितुर्जयसिंहस्य विषये प्रतिभाप्रमत्तः कविराह–'इन्द्रेण स्वहस्तेन तत्कण्ठे माला परिधापिता–**यशोऽवतंसम्**' (१/८३)। किञ्च का घटना कस्मिन्समये (वर्षे) भूदिति न तावदैतिहासिक-बुद्धया काव्यं प्राणीयत कविना। कुत्रचित् 'किञ्चित्कालानन्तरम्', क्वचित् 'बहुदिनानन्तरम्' इत्येवालिख्यत। विक्रमाश्रये काव्यं प्रणयतः कवेरवश्यं तद्वंशजानां स्तुतिर्विशिष्य कर्तव्यम्, किन्तु औचित्यानौचित्यविचारो यो हि काव्यस्य जीवितम् अवश्यं कवेरवधातव्यस्तावत्' इति ह्यालोचकानां दृष्टिकोणः। परं यया दृष्ट्या संप्रति काव्यमालोच्यते पूर्वसमये नासीत्तथा। पुरा हि–काव्यं काममैतिहासिकं स्यात्, पौराणिकं वा, श्रुतकथानकं वा स्यात्काल्पनिकं वा, परं साहित्यनियमानुसारेणैव प्रणयने कविरासीद्विवशः। अवश्यमयं नियमः काव्यशौभायै, श्रोतृणां हृदयावर्जनाय च। अत एव संभावनामसंभावनां वा दूरपर्यन्तमसमीक्ष्य, नायकस्य चरितोत्कर्ष एव तैः सर्वात्मना चित्र्यते स्म। इदमेव कारणमस्ति यत् इतिहासविश्रुतानामपि चालुक्यवंशीयानामतिमानुष-चरित्रप्रदर्शने कवेः संरम्भ इव।

एवं सत्यपि आलंकारिकमंशं पृथक्कृत्य चरितवर्णनस्य या सामग्री सा न काल्पनिकी अपि तु यथार्था। तस्याः सत्यता तैः शिलालेखैः प्रमाणिता ये हि कल्याणे गवेषकैर्लब्धाः। काव्ये या वंशावली वर्णिता सा शिलालेखवर्णितानां चालुक्यवंशीयराजानां नामावलीतः संवदते। घटना अपि प्रायशः शिलालेखघटनाभिः संवदन्ते। ततश्च–काव्यातिशयोक्तिषु सतीष्वपि विक्रमाङ्कदेवचरितं प्राचीनेतिवृत्तपरिज्ञानायाऽत्युपयोगीति को वा नाभिनन्देत। एतस्य मार्गस्य दिग्दर्शकाः कालिदासादयः प्राक्कवयोऽभूवन्, यै रघुवंशादिषु इतिहास-चित्रणं कविकर्मप्रदर्शनं चेत्युभयमपि सम्यक्तया निरूढमिति तु परिचितमेव साहित्यमार्मिकाणाम्।

अतएव डा. बूल्हरः परमपरिश्रमेण चरितकाव्यमिदं संपादयामास दीर्घभूमिकया चालंचकार। एतद्विषये लेखनीं चालयद्भिः सर्वैरेव बूल्हरभूमिकातः सुमहत्साहाय्यमवाप्तम्। सर्वतोऽभिनन्दनीयमस्मिन्काव्ये तदिदमस्ति यत्कविः स्वस्य देशस्य कुटुम्बिनां च समस्तमपि वृत्तं सुस्पष्टं स्वलेखन्या लिलेख। अन्तिमः सर्गः (१८) सर्वोऽप्यनयैव सामग्र्या पूर्णः।

## पुस्तकप्राप्तेरितिहासः

सर्वप्रथमं चरितकाव्यं 'हर्षचरितम्', यत्र ऐतिहासिकस्य राज्ञो हर्षवर्द्धनस्य चरितं महाकविना बाणेन सुललितगद्येनावर्णि। एतदनन्तरं भूयांसं कालं यावन्नोदपद्यत किञ्चिच्चरितकाव्यम्। अद्यतः शताधिकवर्षपूर्वं डा. बूल्हरो जैकोबी च प्राचीनसंस्कृतपुस्तकगवेषणायै राजपुत्रप्रान्ते गतवन्तौ। तत्र जैसलमेरदुर्गाभ्यन्तरे 'ओसवाल' जैनानां बृहज्ज्ञानकोषपुस्तकालये तालपत्र-लिखितं विक्रमाङ्कचरितमिदमलभ्यत ताभ्याम्। हर्षचरितादुत्तरं द्वितीयमिदं चरितकाव्यम्। यद्धि कर्णाट-प्रान्तीय कल्याणनगरनरेशस्य विक्रमाङ्कस्य पद्यबद्धं सुललितचरितम्। एतद्धि तस्यैव सभाकविना बिह्लणेन सामयिकघटनानां प्रत्यक्षसाक्षिभूतेन विरचितम्। बिह्लणः काश्मीरकः ख्रिष्टीयैकादशशतकजातः। यद्विक्रमाङ्कचरितपुस्तकं जैसलमेरदुर्गेऽधिगतं तद् १२८६ ख्रिष्टाब्दे लिखितम्। प्रतीयते यद् बिह्लणात्केवलं २०० वर्षानन्तरमेव तदिदं पुस्तकमलेखि।

विक्रमाङ्कचरितादनन्तरं कुमारपालचरित-गौडवध-हम्मीरवध-नवसाहसाङ्कचरित-प्रभृतीन्यैतिहासिक-चरित-काव्यान्युपलब्धानि प्रकाशितानि च। कुमारपालचरित-गौडवधे प्राकृतभाषामये काव्ये। नवसाहसाङ्कचरितमति-मानुषचरित्रपूर्णं किन्तु तत् प्रसादगुणयुक्तं सुललितं च। हम्मीरवधमेतदपेक्षया-ऽतिलघु हीनं च। अतएवाद्यावधि प्राप्तेषु पद्यमयचरितकाव्येषु विक्रमाङ्क-चरितमिदं सर्वतः प्रधानम्।

## उपसंहारः

महाकाव्यगुणैः संपन्नं कुङ्कुमकेसराणां सहोदरमपि तदेतत्काव्यं समर्थानामपि बहूनां संस्कृतपण्डितानामालोचनक्षेत्राद्दूरगतमिति भूयान् खेदविषयः। सत्यं त्विदमस्ति यत्परीक्षापाठ्यक्रमे यानि पुस्तकान्युपात्तानि तानि विहाय न

साम्प्रतं कानिचित्संस्कृतशिक्षाक्षेत्रे प्रचलितानि। परीक्षापाठ्यक्रमे च मुद्रणयुगात्प्राक्तनानि, राजकीयगवेषणाव्यापारात्पूर्वप्रसिद्धानि, पठनपाठनयोश्चिरात्परिगृहीतानि, पण्डितमहाभागानां चिरपरिचितानि यानि पञ्च महाकाव्यानि तान्यतिरिच्य न किञ्चिदन्यत्परिगृहीतम्। पुस्तकनिर्णायक-महाभागानां चिरपरिचितानि निजाभ्यस्तानि काव्यानि विहाय नान्येषु निपतति कृपादृष्टिः। परीक्षासरितमुत्तीर्णाः कृतविद्याः संस्कृतविद्वांसश्च न तावत्संस्कृतसाहित्याकरस्य दुर्लभतमान्यपि ग्रन्थरत्नान्यालोचयितुमुत्कण्ठन्ते। न वा विलुप्तानां ग्रन्थ-रत्नानामन्वेषणाय प्रयतन्ते। किमधिकम्, अन्यैरन्विष्य परमपरिश्रमतः प्रकाशितान्यपि बहूनि ग्रन्थरत्नान्यद्यावध्यपि संस्कृतानुरागिणामध्ययन-व्यापाराद्दूरीभूतान्येव। तेष्वेव तदिदं विक्रमचरितमप्यासीन्नूनम्। किन्तु कतिपयवर्षेभ्यः काशिकराजकीय-साहित्याचार्य-परीक्षायां विविधेषु चान्येषु पाठ्यक्रमेषु ऐतिहासिक-महाकाव्याख्येन चरितकाव्येनानेन स्थानमुपलब्धमिति संस्कृतपण्डितानामभूदिदं परिचितम्। अतएव सूक्ष्मेक्षिकया तदिदं काव्यं विमृशन्तः संस्कृतपण्डिता मामकीमिमामालोचनां निबन्धमपि चेमं पावयेयुः कृपापावन्या विचारदृष्ट्येति किं वा विशेषज्ञेषु विशेषनिवेदनेन।

